मध्यादधात्यथनाधायिपाभीयेन समिधाहवनीयेन वीरेणेति त्रिकारः
।[26]२२। अङ्गुलं समिधो ऽतिहृत्याभिजुहोति ।२३। ॥८॥
अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायम् ।[27]१। सूर्यो ज्योतिर्ज्योतिः
सूर्यः स्वाहेति प्रातः ।[1]२। दक्षिणं जान्वाच्यावषड्कारम् ।[2]३। उपसा-
द्योत्तरामसंसृजंस्तूष्णीं भूयसीं पूर्वस्याः ।[3]४। स्रुचि भूयिष्ठं कुर्यात् ।[4]५।
स्रुचो ऽभ्रेमाङ्गारानुपस्पृश्य द्विरुदीचीं स्रुचमुद्यम्योपसादयति ।[5]६।
आगन्प्राणः स्वर्गं लोकं जिते जयाम्यभयं मे ऽलोकताया अपुत्रताया
अपशुताया इति यजमानः पूर्वामाहुतिमनुप्राणिति ।[6]७। आगन्न-
पान आत्मानं विजिते विजयाम्यभयं मे ऽलोकताया अपुत्रताया
अपशुताया इत्युत्तरामन्ववानिति ।[7]८। या यज्ञस्य समृद्धस्याशीः सा
मे समृध्यतामिति ।[8]९। उभयोरुत्तरतः प्रतीचीं सायं द्विरुपमार्ष्टि
।[9]१०। ऊर्ध्वां दक्षिणतः प्रातः ।[10]११। पूर्वमुपमार्जनं कुशेषु निक्षिपत्योष-
धीः प्रीणामीति मनसा ।[11]१२। उत्तरं दक्षिणतः पाणिमुत्तानं
निदधाति पितॄन्प्रीणामीति मनसा ।[12]१३। द्विः प्रदेशिन्या प्राश्योप-
स्पृश्योदङ्[13]पर्यावृत्य[14] प्राग्दण्डया भक्षयित्वा[15] प्रत्यग्दण्डां पर्यस्य[16]
निर्लिह्य[17] प्रक्षाल्या[18]चम्य[19] प्रागुदीचीरप उत्सिच्य[20] प्रागुदीचीमुद्दि-
शति[21] ।१४।* एतदेकहोमे कर्म ।[22]१५। सर्वेषु तु जुह्वत्पूर्णां स्रुच-
मुत्तरेण गार्हपत्यं निधाय ।[23]१६। ॥९॥
इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजां जनयतु प्रजापतिः । अग्नये

---

* Comm. द्विः प्रदेशिन्या प्राश्नात्यप प्रागुदीचीमुद्दिशतीति सूत्रच्छेदः। तथापि तु व्यस्तानि वचस वचने.

रयिमते पशुमते पुष्टिपतये स्वाहा। अग्नये गृहपतये स्वाहा। अग्नये स्वाहा। तूष्णीं चतुर्थीं गार्हपत्ये।१।

तत्सवितुर्वरेण्यं भूर्वाग्ब्रह्म मह्यं मे भूयात्स्वाहा।

भर्गो देवस्य धीमहि भुवः प्राणो भूयान्भूयो मे भूयात्स्वाहा।

धियो यो नः प्र चोदयात्स्वर्णाम सर्वं सर्वं मे भूयात्स्वाहा।

अग्नये ऽन्नादायान्नपतये स्वाहेत्यन्वाहार्यपचने चतुर्थीं।२। महाव्याहृतिभिस्तिस्रो ब्रह्मवर्चसकामस्य।३। अविज्ञाता चतुर्थीं।४। याः स्रुच्यापस्तैधं ताः करोत्यग्निहोत्रहवण्यां गार्हपत्यस्य पश्चादञ्जलौ च पत्न्याः।५। सं त्वा सृजामि प्रजया धनेनेत्यञ्जलौ।६। प्रतितप्य स्रुचं निदधाति।७। ॥१०॥

दक्षिणतोऽन्वार्यं याजमानम्।१। उप प्रयन्तो अध्वरमयमग्निः सहस्रिण उभा वामयं ते योनिरयमिहास्य प्रजामिति सर्वा त्रिः प्रथमामुत्तमां च।२। आयुर्दा अग्ने ऽस्यायुर्मे देहि वर्चोदा अग्ने ऽसि वर्चो मे देहि तनूपा अग्ने ऽसि तन्वं मे पाह्यग्ने यन्म ऊनं तन्व१स्तन्म आ पृण

इन्धानास्त्वा शतं हिमा द्युमन्तं समिधीमहि।

वयस्वन्तो वयस्कृतं सहस्वन्तः सहस्कृतम्।

अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्।

इति जपित्वा।३। चित्रावसो स्वस्ति ते पारमशीयेति त्रिः।४। सं त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणां स्तुतेन सं प्रियेण धाम्ना समहमायुषा सं वर्चसा सं प्रजया सं प्रियेण धाम्ना सं रायस्पोषेण ग्मिषीयेत्युपविश्य।५। अस्य स्वाम्भो वो भक्षीय मह स्थ महो वो

भक्षीयोर्जं स्थोर्जं वो भक्षीय रायस्पोष स्थ रायस्पोषं वो भक्षीय ॥११॥

रेवती रमध्वमस्मिन्योनावस्मिँल्लोके ऽस्मिन्गोष्ठे ऽस्मिन्क्षये ऽस्मान्माक्षिष्यस्थां प्रतिष्ठायामिहैव स्तेतो मापगातेति गामभ्येति ।६। संहितासि विश्वरूप्यूर्जा माविश गौपत्येनेत्यस्या ललाटमुपस्पृश्य ।१। उप त्वाग्न इति तृचेनाग्ने त्वं न इति च द्वैपदेन गार्हपत्यम् ।२। इह एवादित एहि सूनृत एहीति गामभ्येति ।३। काम्या एत मयि वः कामधरणमिति वत्सस्य ललाटमुपस्पृश्य ।४। धामाश्वं स्वरणमिति तृचेनोत्तरतो ऽन्वाहार्यपचनम् ।५। अन्तरेण गार्हपत्याहवनीयौ मार्हिदं जपित्वाहवनीयमुपतिष्ठते ।६। तत्सवितुर्वरेण्यं कदा चन स्तरीरसि परि ते दूलभ इति चिरेताम् ।७। सर्वेषु तु शुक्रमहाव्याहृतिभिस्तिस्तिस्रः समिधो ऽभ्यादधात्याहवनीये वैकङ्कतीः ।८। दैव्यस्तन्तुरस्यनु त्वा रभे माहं त्वद्व्यवच्छित्सीत्याहवनीयस्य दक्षिणतो ऽङ्गारामुपस्पृश्य ।९। ततो ऽसि तन्तुरस्यनु मा संतनुहि प्रजया पशुभी रायस्पोषेण सुप्रजास्त्वेन सुवीर्येण मानुष्यस्तन्तुरस्यनु मा रभस्व मा त्वं मद्व्यवच्छित्था असाविति ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य यावन्तो वा भवन्ति ।१०। आत्मनो ऽजातपुत्रः ।११। सत्येनावभृथमभ्यैत्स्यप्सु मतमित्याचम्य वाचं विसृजते ।१२। ॥१२॥

अथ प्रातः ।१। भूर्भुवः स्वः सुप्रजाः प्रजाभिर्भूयासं सुपोषः पोषैः सुवीरो वीरैरभयं ते ऽभयं नो अस्तु मनसा त्वोपतिष्ठे लोकमुपैमि स्वरित्याहवनीयम् ।२। अत्रैव तिष्ठन्नितरौ ।३। अभयं ते ऽभयं नो अस्तु वाचा त्वोपतिष्ठे प्रजामुपैमि पशूंश्चेति गार्हपत्यम् ।४।

अभयं ते ऽभयं नो अस्तु प्राणेन त्वोपतिष्ठे व्यानमुपैम्यायुषेत्यन्वाहार्यपचनम् ।५। अभयं वो ऽभयं नो अस्तु कामेन व उपतिष्ठे वित्तिमुपैमि भूतिं चेति सर्वान् ।६। समानं समित्संस्थया व्रतस्य विसर्जनात् ।७। अनेन वैव सायंप्रातः ।८। अनुपस्थानं वा प्रातः ।९। ॥१३॥

प्रवत्स्यन्नग्नीन् समीक्षते ऽभयं वो ऽभयं नो अस्त्विति ।१। नर्य प्रजां मे पाहि मानुषान्मा भयात् पाहीति गार्हपत्यम् ।२। अथर्य पितॄन् मे पाहि पित्र्यान्मा भयात् पाहीत्यन्वाहार्यपचनम् ।३। तमुत्तरेण गत्वा शंस्य पशून्मे पाहि दैवान्मा भयात्पाहीत्याहवनीयम् ।४। अन्नमन्नमिति त्रीणि पदान्यभ्युत्क्रम्य सकाशादागमनम् ।५। अन्युपस्थानस्त्वानर्थलुप्तं प्रवसन्नापेत् ।६। याजमानं च पर्वणि ।७। अनपेतं [illegible] कारणम् ।८। सन्निवेशयोर्वाचमस्य वाचं यता पुनरागम्य महाव्याहृतिभिर्विसर्गः ।९। चतुर्विधये ऽग्नीनां वासं यच्छेत् ॥१४॥

प्रोष्यायन् ।१०। तथा चैव समीक्षणम् ।१।

　　आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवं वसुवित्तमम् ।
　　अग्ने सम्राळभि द्युम्नमभि सह आ यच्छस्व ॥

शंस्य पशून्मे ऽनुपस्थामे पाहीव दैवान्मा भयादनुपस्थानान्मा पाहीत्याहवनीयम् ।२। तृणापचयनं समिदाधानं च सर्वेषु ।३।

　　अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः ।
　　अग्ने पुरीष्याभि द्युम्नमभि सह आ यच्छस्व ॥

---

* Comm. अर्यर्यन्त्येवमादिना मन्त्रेणान्वाहार्यपचनमुपतिष्ठते । उत्तरेण स्थितः । समिति यत्रादागमनप्रभृत्येव । अर्यादिविपर्ययात् ।

† शंस्येत्येवमादिना मन्त्रेणाहवनीयमुप॰ । दक्षिणाग्निमुत्तरेण गत्वा—

भवीयोर्जे स्थोर्जं वो भवीय रायस्पोष स्थ रायस्पोषं वो भवीय ॥१३॥

रेवती रमध्वमस्मिन्योनावस्मिंल्लोके ऽस्मिन्गोष्ठे ऽस्मिन्क्षये ऽस्मा-न्माविध्यस्तो प्रतिष्ठायामिहैव स्तेतो मापगातेति गामभ्येति ।६। संहितासि विश्वरूपूर्जा माविश गौपत्येनेत्यस्या ललाटमुपस्पृश्य ।१। उप त्वाग्न इति द्वचेनाग्ने त्वं न इति च द्वैपदेन गार्हपत्यम् ।२। इह प्रजादित एहि सूनृत एहीति गामभ्येति ।३। काम्या एत मयि वः कामधरणमिति वत्सस्य ललाटमुपस्पृश्य ।४। सोमानं स्वरणमिति द्वचेनोत्तरतो ऽन्वाहार्यपचनम् ।५। अन्तरेण गार्हपत्याहवनीयौ माहिर्भं जपित्वाहवनीयमुपतिष्ठते ।६। तत्सवितुर्वरेण्यं कदा चन स्तरीरसि परि ते दूलभ इति त्रिरेताम् ।७। सर्वेषु तु शुक्लमहा-ध्यायादिभिस्त्रिस्त्रिः समिधो ऽभ्यादधात्याहवनीये वैकङ्कती ।८। दैवसन्तुरस्यतु त्वा रभे मार्ह त्वद्व्यवच्छित्सीत्याहवनीयस्य दक्षिणतो ऽङ्गारानुपस्पृश्य ।९। ततो ऽसि तन्तुरस्यतु मा सन्ततुहि प्रजया पशुभी रायस्पोषेण सुप्रजास्त्वेन सुवीर्येण मानुषस्तन्तुरस्यतु मा रभस्व मा त्वं मद्व्यवच्छित्था अवाविति ज्येष्ठस्य पुत्रस्य नामाभिव्याहृत्य यावन्तो वा भवन्ति ।१०। आत्मनो ऽजातपुत्रः ।११। तथैनाव-भृथमभ्यवैत्यपु मतमित्याश्य वाचं विसृजते ।१२। ॥१३॥

अथ प्रातः ।१। भूर्भुवः स्वः सुप्रजाः प्रजाभिर्भूयासं सुपोषः पोषैः सुवीरो वीरैरभयं ते ऽभयं नो अस्तु मनसा त्वोपतिष्ठे लोक-मुपैमि स्वर्गेत्याहवनीयम् ।२। अत्रैव तिष्ठन्नितरौ ।३। अभयं ते ऽभयं नो अस्तु वाचा त्वोपतिष्ठे प्रजामुपैमि पशूंश्चेति गार्हपत्यम् ।४।

अभयं ते ऽभयं नो अस्तु प्राणेन त्वोपतिष्ठे व्यानमुपैम्यायुष्टेत्यन्वाहार्यपचनम् ।५। अभयं वो ऽभयं नो अस्तु कामेन व उपतिष्ठे वित्तिमुपैमि भूतिं चेति सर्वान् ।६। समानं समित्प्रभृत्या व्रतस्य विसर्जनात् ।७। अनेन वैव सायंप्रातः ।८। अनुपस्थानं वा प्रातः ।९। ॥१३॥

प्रवत्स्यन्नग्नीन् समीक्षते ऽभयं वो ऽभयं नो अस्त्विति ।१। नर्य प्रजां मे पाहि मानुषान्मा भयात् पाहीति गार्हपत्यम् ।२। अथर्य पितॄन् मे पाहि पित्र्यान्मा भयात् पाहीत्यन्वाहार्यपचनम् ।३। तस्योत्तरेण 8• गत्वा शंस्य पशून्मे पाहि दैव्यान्मा भयात्पाहीत्याहवनीयम् ।[4]४। उपयमनमिति त्रीणि पदान्यभ्युत्क्रम्य[*] सकाशादागमनम् ।[6]५। अन्नुपस्थानस्यानर्थलुप्तं प्रवसन्नपेत् ।[7]६। याजमानं च पर्वणि ।[8]७। अनपेतं हि कारणम् ।[9]८। सन्धिवेलयोर्वाचस्य वाचं यत्वा पुनराचम्य महाव्याहृतिभिर्विसर्गः ।[10]९। चतुर्विषये ऽग्नीनां वाचं यच्छेत् ॥१४॥

प्रोष्यायन् ।[11]१०। तथा चैव समीक्षणम् ।१।

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
अग्ने सम्राळभि द्युम्नमभि सह आ यच्छस्व ॥

शंस्य पशून्नो ऽजुगुपस्तान्नो पाह्येव दैव्यान्मा भयादजुगुपस्तस्मान्मा पाह्येत्याहवनीयम् ।२। तृणापचयनं समिदाधानं च सर्वेषु ।३।

अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः ।
अग्ने पुरीष्याभि द्युम्नमभि सह आ यच्छस्व ॥

---

* Comm. अथर्यत्येवमादिना मन्त्रेणान्वाहार्यपचनमुपतिष्ठते । उत्तरेण स्थितः । तमिति पदाद्रायत्याग्निमेव । अर्थाद्दक्षिणेसमाप्तः ।

† शंस्येत्येवमादिना मन्त्रेणाहवनीयमुप० । दक्षिणाग्निमुत्तरेण गत्वा—

अयं पितृं मे ऽजुगुपत्तं मे पाह्येव पित्र्यान्मा भयादजुगुपस्तस्मान्मा पाहीत्यन्वाहार्यपचनम् ।४।

अयमग्निर्गृहपतिर्गार्हपत्यात्प्रजाया वसुवित्तमः ।
अग्ने गृहपते ऽभि द्युम्नमभि सह आ यच्छस्व ॥

नयं प्रजां मे ऽजुगुपत्तां मे पाह्येव मानुषान्मा भयादजुगुपस्तस्मान्मा पाहीति गार्हपत्यम् ।५। व्यवेतो ऽग्नीन्प्रवसति ।६। तेन चैवो-त्सृज्यते ।७। ॥१५॥

वास्तोष्पतीयं भौम्ये दमराचावरार्धे संप्रयातेषु ।१। अग्निष्ठस्य दक्षिणे युक्त उपोह्य चीवरं वास्तोष्पते प्रतिजानीहीत्यनूच्य वास्तोष्पते शग्मयेति यजति ।२। ऊते चाभाहितं त्यजेत् ।३। ॥१६॥

समारोहयमाणो गार्हपत्ये पाणी प्रतितप्य प्राणान्संमृशत्येषि मे प्राणमारोहेति ।१। सकृत्सकृन्मन्त्रेण द्विर्द्विस्तूष्णीम् ।२। अयं ते योनिरिति वारणी प्रतितपति ।३। सकृत्सकृन्मन्त्रेण द्विर्द्विस्तू-ष्णीम् ।४। एवमाहवनीयात् ।५। नित्यधृतादन्यस्मिन् ।६। अनस्त-मिते च मन्थनम् ।७।

उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् ।
आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे ॥

इत्यात्मनो ऽरण्योरुपावरोह्य मन्थनम् ।८। लौकिके वा लौकिके वा ।९। ॥१७॥

इति शाङ्खायनश्रौतसूत्रे द्वितीयो ऽध्यायः समाप्तः ।

---

ओम्।

---

संस्थितायां पौर्णमास्यामिन्द्रायेष्टिर्विमृधे ।१। अमावास्याविकारः ।२। इन्द्र क्षत्रं मृगो न भीमः ।३। जुष्टो दमूना अग्ने शर्धेति स्विष्टकृतः ।४। अदितये ऽमावास्यायां संस्थितायाम् ।५। पौर्णमासीविकारः ।६। ये वैमृधस्य ते स्विष्टकृतः ।७। यावज्जीवं च ।८। प्रयोग आन्तात् ।९। ॥१॥

अनागते पर्वण्यामावास्ये प्रवसे ऽभ्युदितेष्टिः ।१। अग्नये दात्र इन्द्राय प्रदात्रे विष्णवे शिपिविष्टायेति ।२। निरुप्ते जानंस्तानेव विभजेत् ।३। अग्ने दादानो अग्ने हृष्टतः ।४। यच्चा ते मता हु भर ।५। अमावास्याविकारः ।६। धनुश्च चीषु दक्षिणा ।७। काले चामावास्यम् ।८। नाभ्यावृत्तिः पिण्डपितृयज्ञस्यास्ति ।९। ॥२॥

अतीते पर्वण्यामावास्ये प्रवसे ऽभ्युद्दृष्टेष्टिः ।१। अग्नये पथिकृत इन्द्राय वृत्रघ्ने वैश्वानराय ।२। वेत्था हि वेध आ देवानाम् ।३। मार्च्छयाय वह्दातुम् ।४।

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं भानुमीमहे[5] ॥

नाभिं यज्ञानाम् ।[6]५। अमावास्याविकारः ।[7]६। दण्डोपानहं दक्षिणा ।[8]७। संस्थितायां चामावास्यम् ।[9]८। नाभ्यावृत्तिः पिण्डपितृयज्ञस्यास्ति ।[10]९। ॥३॥

अग्नये ऽग्निमते ऽग्न्याधानम्युद्धृते ।१। पथिकृते ऽन्तरेण विहारं

चक्रीवति वृत्ते नियतातिपत्तौ [illegible] ।२। वीतये मिथःसंसृष्टेषु ।३। विविचये धाम्येण ।४। संवर्गाय प्रदाव्येन ।५। शुचये क्षव्येण ।६। अप्सुमते वैद्युतेन ।७। व्याधिशाये रुद्राय ।८। अध्वानं गमिष्यन् पृष्ठे पथिकृते ।९। सार्वकामिक्ययस्ये कामाय ।१०। व्रतपतये व्रत्यवेलां प्रोष्यामत्यं वा चरित्वा ।११। व्रतभृते ऽश्रुकृत्वा ।१२। गृहदाहे क्षामवते ।१३। मरुद्भ्यो यमौ प्रजातायाम् ।१४। ॥४॥

अग्निमग्निं हवीमभिरग्निनाग्निः समिध्यते ।१। अग्न आ याहि वीतये ये। अग्निं देववीतये ।२। कया नो अग्ने विवसस्त्वामग्ने मानुषीः ।३। कुविसु नो गा नो अभिन्नसाधने ।४। अप्स्वग्न उरौ महान् ।५। कद्रुद्रायाग्नाम ते ।६। वयमु त्वा पथस्पते पथस्पथः ।७।

अग्निः परेषु धामसु कामो भूतस्य भव्यस्य ।
सम्राळेको वि राजति[8] ॥

अगन्नाम तम् ।[9]८।

त्वमग्ने व्रतभृच्छुचिरग्ने देवाँ इहा वह ।
उप यज्ञं हविश्च नः[10] ॥

व्रतानि बिभ्रद्व्रतपा अदाभ्यो भवा नो दूतो अजरः सुवीरः ।
दधद्रत्नानि सुमृळीको अग्ने गोपाय नो जीवसे जातवेदः ॥ ।[11]९।

तथा रजांसि पत्युतस्थे वसूनि पुर्वणीक होतः ।[12]१०।

मरुतस्त्वेपसंदृश आ यात यमाविव ।
शुभ्रा हिरण्यखादयः[13] ॥

शतत्विषो मरुतः श्रिये कमिति वा ।[14]११। ॥५॥

ज्ञातयो ऽसंविदाना बहुदेवतामिष्टिं निर्वपेरन् ।१।

अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रैरभि रक्षतु त्मना।
इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणः शर्म यंसत् ॥[2]
समग्निर्वसुभिर्नो अव्यात्सं सोमो रुद्रियाभिस्तनूभिः।
समिन्द्रो रातहव्यो मरुद्भिः समादित्यैर्वरुणो विश्ववेदाः। ३[3]।

संज्ञानमिति च जपेरन्। ४[4]। ॥६॥

मित्रविन्दायाः ।१। पञ्चदश सामिधेनीः ।२। अग्निना रयिं गयस्फान इत्याज्यभागौ ।३।

अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री।
पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैः ॥[4]
त्वष्टा रूपाणि दधती सरस्वती पूषा भगं सविता मे ददातु।
बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निः॥। ४[5]।

नू नो रास्व सहस्रवत्तु नो मञ्जुवविप इति स्विष्टकृतः। ५[6]। सहस्रं दक्षिणा। ६[7]। देवतानुपूर्व्यं पुरोनुवाक्यास्विनिगमेषु। ७[8]। याज्यावदा-देशे। ८[9]। यथासंप्रेषितं वा। ९[10]। ॥७॥

फाल्गुन्यां पौर्णमास्यां प्रयोगोऽदीक्षितायमानाम्।१। वसिष्ठयज्ञस्यामावास्यायां साकंप्रस्थाय्यस्य च। २। पञ्चदश वर्षाणि दाक्षायणयज्ञस्य।३। संवत्सरंसंवत्सरं वा सर्वेषाम्।४। न प्रयुञ्जानस्य नित्यौ दर्शपूर्णमासौ वर्तेते।५। दाक्षायणयज्ञस्य।६। पौर्णमासानि पूर्वेद्युः।७। अग्नीषोमीयो वा।८। आग्नेयः सांनाय्यं चैन्द्रं पौर्णमास्याम्।९। अपरपक्षे दीक्षितव्रतोऽतिथिभ्यो ददाति।१०। सत्यव्रतो वा।११। अभ्यञ्जनहस्ताविकपल्पूलितानि न वसीत।१२। अनिरुच्छिष्टाशनः।१३। न लौहित्यं प्राप्नुयात्।१४। सोमं राजानं चन्द्रमसं भक्षयामीति मनसा ध्यायन्नश्नाति

।१५। आमावास्यानि पूर्वेद्युः ।१६। ऐन्द्राग्नो वा ।१७। आग्नेयो मैत्रावरुणी च पयस्यामावास्यायाम् ।१८। एतेन या उत वा विदु ।१९। पुरा शंयोर्वाकादूर्ध्वं वानावाह्य वाजिनो यजति ।२०। उत्तमे प्रयाजे निगच्छन्ति यथार्थे च सूक्तवाके ।२१। वाजिनो देवा हविर्जोषयिष्यन्ते वर्धयिष्यन्ते महो ज्यायः करिष्यन्ते ।२२। शं नो भवन्तु वाजिनो वाजेवाज इत्यूर्ध्वमुरनवानं यजति ।२३। वाजिनस्याग्ने वीहीत्यनुवषट्कारः ।२४। यजमानो ब्रह्मा होताध्वर्युराग्नीध्रश्च समुपह्वय भक्षयन्ति ।२५। प्रथमो जघन्यश्च यजमानः ।२६।

यन्मे रेतः प्र धावति यद्वा सिक्तं प्र जायते ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

वाजो ऽसि वाजिनमसि वाजो मयि धेहीति भक्षमन्त्रः ।२७। ॥८॥

इलादधस्य ।१। आग्नेय सारस्वत्यौ च ।२। अग्नीषोमीयः सोपांशुयाजः सांनाय्यं चैन्द्रं पौर्णमास्याम् ।३। एतानि च दाक्षायणयाज्ञिकानि ।४। आग्नेयः सारस्वते च ।५। ऐन्द्राग्नो मैत्रावरुणी च पयस्यामावास्यायाम् ।६। समानं वाजिनम् ।७। ॥ ९ ॥

सार्वसेनियज्ञे ।१। उभयानि हवींष्येकस्यामिष्टौ ।२। पौर्णमासानि पूर्वाणि ।३। अर्धन्तस्साकमग्ने अध्वरमित्युत्तरस्याग्नेयस्य ।४। नामावास्यां यजते ।५। पिण्डपितृयज्ञं तु करोति ।६। न शौनकयज्ञे शाकंप्रस्थाय्ये [redacted] विकारो होतुरस्ति ।७। ॥ १० ॥

सार्वसेनियज्ञेन वसिष्ठयज्ञो व्याख्यातः ।१। पूर्वाणि त्वामावास्यानि ।२। न पौर्णमासीं यजते ।३। इति दर्शपूर्णमासायनानि ।४। काम्यानि ।५। पाञ्चदश्यं च सामिधेनीनाम् ।६। आग्नेयाग्नावैष्णवौ ।७। पौर्णमा-

सौविकारः ।८। सदा यजते ऽन्यच पर्वणः ।९। सुन्ययनमित्याचचते ।१०। आग्नेयैन्द्रो वैश्वदेवः ।११। अमावास्याविकारः ।१२। सदा यजते ऽन्यच पर्वणः ।१३। अदीचितः कृष्णाजिनं प्रतिमुञ्चते ।१४। तुरायणमित्याचचते ।१५। संवत्सरप्रयोगे च ।१६। ॥ ११ ॥

सौमी श्यामाकेष्टिः ।१। वैणवी च ।२। ऐन्द्राग्न आग्नेन्द्रो वा वैश्वदेवो द्यावापृथिवीयश्च व्रीहियवानाम् ।३। सद्दाज्यभागे ।४। इमं यज्ञं या ते धामानि दिवीति ।५। सौम्यस्य मधुपर्को दक्षिणा ।६। इयं वामस्य मन्मन इति नु ।७। आ घा ये सुकर्माणः सुरुचः ।८। मही द्यौर्वी पृथ्वी ।९। वैश्वदेवद्यावापृथिवीयौ चोर्यांऽश ।१०। विराजौ स्विष्टकृतः ।११। वत्सः प्रथमजो दक्षिणा ।१२। समाप्य वा दर्शपूर्णमासाभ्याम् ।१३। दर्शपूर्णमासौ वा नवानाम् ।१४। अग्निहोत्रं वा यवाग्वा सायंप्रातः ।१५। अग्निहोत्रीं वा नवानादयित्वा तस्यै दुग्धेन सायंप्रातरग्निहोत्रं जुहुयात् ।१६। गार्हपत्ये वा स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यः स्वाहाकारेणाहवनीये जुहुयात् ।१७। ॥१२॥

फाल्गुन्यां पौर्णमास्यां प्रयोगश्चातुर्मास्यानाम् ।१। चैत्र्यां वा ।२। वैश्वानरीयपार्जन्येष्टिः पूर्वस्यां पौर्णमास्याम् ।३। पर्जन्याय प्र गायत ।४। उत्तरस्यां वैश्वदेवम् ।५। आग्नेयः ।६। सौम्यसावित्रौ ।७। सारस्वतपौष्णौ ।८। मरुद्भ्यः स्वतवद्भ्यः ।९। वैश्वदेवी ।१०। द्यावापृथिवीयश्च ।११। हिरण्यपाणिमूतय उदीरय ।१२। युवन्त शुक्रं ते ।१३। इहेह वः प्र चित्रम् ।१४। अग्निमन्थनीयासामनु हविषु ।१५। पश्चादेदेरवस्थायाग्नये मथ्यमानायेति संप्रेषितः ।१६। अभि त्वा

देव सवितः [17] । मही द्यौः [18] । त्वामग्ने पुष्करादिति च तिस्रः [19] । उत ब्रुवन्तु जन्तव इति जाताय [20] । आ यं हस्ते न खादिनमिति हस्तेन धार्यमाणाय [21] । उत्तरे प्रह्रियमाणाय [22] । अग्निनाग्निः समिध्यते [23] । त्वं ह्यग्ने अग्निना [24] । तं मर्जयन्तेत्य[25]ग्निमन्थनीयाः ।१७[26]। नव च प्रयाजाः ।१८[27]। चतुर्थोत्तमावन्तरेण चत्वारः ।१९[28]। दुरो अग्न आज्यस्य व्यन्तु [29] । उषासानक्ता अग्न आज्यस्य वीताम् [30] । दैव्या होतारा अग्न आज्यस्य वीताम् [31] । तिस्रो देवीरग्न आज्यस्य व्यन्तु ।२०[32]। सद्वन्तावाज्यभागौ ।२१[33]। मा त्रिवद्यावापृथिवीयौ चोपांशु ।२२[34]। विराजौ स्विष्टकृतः ।२३[35]। वत्सः प्रथमजो दक्षिणा ।२४[36]। नवानुयाजाः ।२५[37]। प्रथमद्वितीयौ तु चलन्तरेण ।२६[38]। देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु [39] । देवी उषासानक्ता वसुवने वसुधेयस्य वीताम् [40] । देवी जोष्ट्री वसुवने वसुधेयस्य वीताम् [41] । देवी ऊर्जाहुती वसुवने वसुधेयस्य वीताम् [42] । देवा दैव्या होतारा वसुवने वसुधेयस्य वीताम् [43] । देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु ।२७[44]। समानं वाजिनम् ।२८[45]। संस्थितायां पौर्णमासम् ।२९[46]। मांसाशनं ब्रह्मचर्यं प्राङ्धः शेत ऋतुकाले वा जायामुपेयात्सत्यवदनं चान्तरालव्रतानि ।३०[47]। ॥१. २॥

आषाढ्यां वरुणप्रघासाः फाल्गुनीप्रयोगस्य ।१। चैत्रीप्रयोगस्य श्रवणायाम् ।२। पौष्णान्तानि वैश्वदेविकानि ।३। ऐन्द्राग्नो वारुणी पयस्या मारुती कायश्च ।४। इमं मे वरुण तत्त्वा यामि ।५। मरुतो यद्ध यूयमस्मान् ।६। हिरण्यगर्भो यः प्राणत इति ।७। आहवनीयाद्द्वावग्नी प्रणयन्ति ।८। प्र देवं देव्येति तिसृणामासीनः प्रथमाम् ।९।

उत्तरे अनुसंयन्।१०। इडायास्त्वेति साद्यमानयोरिध्मयोः।११। अग्ने विश्वेभिः स्वनीक सीद होतर्नि होता त्वं दूतः।१२। इत्यग्निप्रणयनीयाः।१३। यत्र चासीनः प्रथमामन्ववोचत्तत्स्थलोत्सृज्यते।१४। उत्तरस्यां वेदौ होतृकर्म।१५। उपांशु कार्यः।१६। गोमिथुनौ दक्षिणा।१७। अध्वर्युर्वेदिं स्तृणाति।१८। वारुण्या निष्कासेनावभृथमवेति यथा सोमे।१९। उरुं हि राजा शतं ते।२०। समानमन्यद्वैश्वदेवेन।२१। ॥१४॥

कार्त्तिक्यां साकमेधाः फाल्गुनीप्रयोगस्य।१। आग्रहायण्यां चैत्रीप्रयोगस्य।२। अग्नये ऽनीकवते पूर्वस्यां पौर्णमास्यामिष्टिः पूर्वाह्णे।३।

अनीकैर्द्वेषो ऽर्दयाग्ने विश्वाभिरूतिभिः।
रयिं नो देहि जीवसे ॥ [4]

सैनानीकेन।४।[5] मध्यन्दिने मरुद्भ्यः सांतपनेभ्यः।५।[6] सांतपना यो नो मरुतः।६।[7] सायं मरुद्भ्यो गृहमेधिभ्यः।७।[8] अग्निना रयिं गयस्फान इत्याज्यभागौ।८।[9] गृहमेधास आ गत प्र बुध्ना वः।९।[10] त्वां चित्रश्रवस्तम यद्वाहिष्ठमिति स्विष्टकृतः।१०।[11] न निगदमाह।११।[12] न सामिधेनीरन्वाह।१२।[13] आज्यभागप्रभृतीड्येडान्ता।१३।[14] तस्य निष्कासं प्रातः पूर्णदर्व्यं कृत्वेष्टिं मरुद्भ्यः क्रीडिभ्यः।१४।[15] क्रीळं वः पर्वतश्चित्।१५।[16] महाहविषि।१६।[17] ऐन्द्राग्नान्तानि वारुणप्रघासिकानि।१७।[18] माहेन्द्रो वैश्वकर्मणश्च।१८।[19] वाचस्पतिं या ते धामानि परमाणीति।१९।[20] उपांशु वैश्वकर्मणः।२०।[21] एकस्याग्निः प्रणीयते।२१।[22] ऋषभो दक्षिणा।२२।[23] न वाजिनं नावभृथो भवति।२३।[24] समानमन्यद्वरुणप्रघासैः।२४।[25] ॥१५॥

अपराह्णे पित्र्या त्रिहविरिष्टिः ।१। सोमाय पितृमते पितृभ्यो वा सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्यः पितृभ्योऽग्निष्वात्तेभ्यः ।२। अग्निश्च कव्यवाहनः स्विष्टकृद्भवति ।३। त्वं सोम प्र चिकितः सोमो धेनुं त्वं सोम पितृभिरिति सोमस्य पितृमतः ।४। उदीरतामङ्गिरसो ये नः पूर्व इति सोमवताम् ।५। उपहूता माहं पितॄन्बर्हिषद इति बर्हिषदाम् ।६। अव सृज ये चेहाग्निष्वात्ता इत्यग्निष्वात्तानाम् ।७। एकैका याज्या द्वे द्वे पूर्वे पुरोनुवाक्ये ।८। अर्थतस्ते नामामनने ।९। ये सातृपुस्त्वमग्न ईळित इत्यग्नेः कव्यवाहनस्य ।१०। प्राचीनावीत्येता देवता यजति ।११। निगमस्थानेषु चानुवर्तयति ।१२। पितृमन्त्रं परिहाप्य ।१३। यज्ञोपवीतीति जातूकर्ण्यः ।१४। संप्रैषेषु स्वधामन्त्रे क्रियमाणे ये स्वधामहे स्वधा नम इति येयजामहवषट्कारयोः स्थाने ।१५। दक्षिणान्वाहार्यपचनात्परिश्रिते चरन्ति ।१६। अपरेण वेदिं दक्षिणा तिष्ठति ।१७। न च बर्हिराक्रामति ।१८। उत्सर्गो जपानाम् ।१९। कर्माणि तूष्णीं जपमन्त्राणि ।२०। उपसदि चेत्याचार्याः ।२१। कर्म तु न्यायः ।२२। उभयतस्त्र्येकां सामिधेनीं त्रिरनूच्य नावेयमाह ।२३। अपबर्हिषः प्रयाजानिष्ट्वा सो अग्ने सुकेतुना त्वं सोम महे भगमिति जीवन्वन्तावाज्यभागौ ।२४। उपहूयेलां न प्राश्नन्ति ।२५। अवघ्राय भागान्भक्षयन्ति ।२६। पितृभ्यो दत्ते ।२७। ॥१६॥

अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनुं तन्वामैरयत ॥

इति जपन्त उत्तरेणान्वाहार्यपचनं गत्वा ।१। सुसंदृशं त्वा वयं-मक्षन्नमीमदन्तोपो षु शृणुहीत्याहवनीयमुपस्थाय ।२। मनो न्वा

ऽवामह इति द्वचेन दक्षिणाग्निम् ।३। आ म एतु मनः पुनरिति सृयुः ।४। अग्निं तं मन्य इति द्वचेनाग्ने त्वं न इति च द्वैपदेन गार्हपत्यम् ।५। तच्चक्षुरित्यादित्यमुपस्थाय ।६। अपबर्हिषावनुयाजाविष्ट्वा ।७। न सूक्तवाके यजमानस्य नाम गृह्णाति ।८। प्रत्यक्ता च ।९। त्र्यम्बकान्संस्थाप्य मैत्रश्चरुः ।१०। अदितये वा ।११। मित्रस्य चर्षणीधृतो महाँ आदित्यः ।१२। संस्थितायां पौर्णमासम् ।१३। ॥१७॥

शुनासीरीयं ।१। पौष्णान्तानि वैश्वदेविकानि ।२। शुनासीरीयो वायव्यं पयः सौर्यश्च ।३। शुनासीराविमां शुनं नः फालाः ।४। तव वायवृतस्पते ऽध्वर्यवश्चक्रवांसः ।५। तरणिर्विश्वदर्शतो दिवो रुक्म इति ।६। उपांशु सौर्यः ।७। अश्वः श्वेतो दक्षिणा ।८। गौर्वा ।९। सीरं वा द्वादशायोगम् ।१०। न वाजिनम् ।११। समानमन्यद्वैश्वदेवेन ।१२। पौर्णमासं लप्स्यमाने ।१३।

इन्द्रस्य नः शुनासीराविमं यज्ञं मिमिक्षताम् ।
गर्भान्धत्तं स्वस्तये ॥[14]
ययोरिदं [विश्वं] भुवनमा विवेश ययोरानन्दो निहितो महश्च ।
शुनासीरावृतुभिः संविदाना इन्द्रवन्ता हविरिदं जुषेथाम् ॥ ।१४।[15]
इन्द्राय शुनासीराय स्रुचा जुहुतना हविः ।
जुषतां प्रति मेधिरः ॥[16]
प्र हव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः ।
इन्द्र ऋभुभिर्ब्रह्मणा संविदानः शुनासीरी हविरिदं जुषस्व ॥ ।१५।[17]

शुनं हुवेमाश्वायन्तः ।१६।[18] साकमेधैरिष्ट्वान्वहं शुनासीर्यम् ।१७।[19] माघ्यां वा पौर्णमास्याम् ।१८।[21] सोमेनोत्सर्गः पशुनेष्ट्वा वा ।१९।[21]

इत्यभ्युदितयोस्त्वभ्यस्तमितयोर्वान्येन वा नष्टयोः कारणेनाग्न्याधेयेनोत्पादयेत् ।१७। ॥१८॥

उपसृष्टा चेदग्निहोत्री वाश्येत स्वयवसादिति यवसमुष्टिं प्रयच्छेत् ।१। उपविशेच्चेत् ।

यस्माद्भीषा निषीदसि ततो नो अभयं कृधि ।
प्रजाभ्यः सर्वाभ्यो मृळ नमो रुद्राय मीळ्हुषे ॥

इत्यार्द्रदण्डेनोत्थाप्य

उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।
इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥

इत्यनुमन्त्रयेत ।२। देयाय वा दद्यात् ।३। हविषि स्कन्ने ऽस्कार्यं वो

ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥

इत्यद्भिरुपनिनीयास्कानधित प्राजनि । दिवं देवांस्तृतीयं यज्ञो ऽगात्ततो मा द्रविणमष्ट्वन्तरिक्षं पितॄंस्तृतीयं यज्ञो ऽगात्ततो मा द्रविणमष्टु पृथिवीं मनुष्यांस्तृतीयं यज्ञो ऽगात्ततो मा द्रविणमष्टित्यनुमन्त्रयेत ।४। यद्ब्राह्मणो जुगुप्सुर्न भक्षयेदेतद्दुष्टस्य लक्षणम् ।५। तस्यापः प्रतिपत् ।६। शेषे विद्यमाने तेन समापनम् ।७। शेषाभावे ऽन्यदुत्पादयेत् ।८। तस्मिन्द्रव्ये ऽविद्यमाने यत्सामान्यतमं मन्येत तत्प्रतिनिदध्यात् ।९। एष प्रतिनिधीनां धर्मः ।१०। अविकारश्च शब्दानाम् ।११। अप्रत्तदेवते दुष्टे नावृत्तिरस्ति हौत्रस्यान्यद्धविः संस्कृत्य प्रयच्छेद्देवतायै ।१२। नावृत्तिः प्रत्तदोषे ऽस्ति लुप्यते स्विष्टकृदिलं भक्षाश्च ।१३। आज्येन परम् ।१४। अन्यासु देवता-

स्विष्टासु दुष्टेन वा शेषवति तस्मै प्रदानमावर्तेत ।१५। सर्वेष्विरशेषे ।
१६। कृतस्थानादृत्तिर्गुणलोपे संनिपातप्रधानत्वात् ।१७। मन्त्रं नानु-
जपेत् ।१८। अनुजपेदिति जातूकर्ण्यः ।१९। अन्याभ्यो गृहीते
ऽन्यासु चावाहितासु चोदिताभ्यः प्रयच्छेदाज्येनावाहिता यजेत्
।२०। ॥२०॥

हविःपशुबन्धेषु सोमे च प्रायश्चित्तं ब्रह्मा जुहोति ।१। ऋग्वेदे
चेद्दोषः भूः स्वाहेति गार्हपत्ये ।२। यजुर्वेदे चेद्भुवः स्वाहेत्यन्वा-
हार्यपचने ।३। सोमे त्वाग्नीध्रीये ।४। सामवेदे चेत्स्वः स्वाहेत्याहव-
नीये ।५। भूर्भुवः स्वः स्वाहेत्यज्ञायमाने दोषे ।६। अनुपस्थाय
प्रवर्गे प्रतिदिशमुपस्थानम् ।७। उपस्थायाप्रवर्गे यथा प्रैष्य ।८।
समारोह्याप्रवर्गे मन्थनम् ।९। नारण्योरप्युपस्थानम् ।१०। नाहोमे-
नाग्निव्यया वाग्नीनुत्सृजेत् ।११। प्रायश्चित्तं तु कृत्वातीतानि कर्माणि
प्रतिनिदध्यात्प्रतिनिदध्यात् ।१२। ॥२१॥

इति शाङ्खायनश्रौतसूत्रे तृतीयो ऽध्यायः समाप्तः ।

---

ओम् ॥

पत्नीयजमानौ व्रतम् ।१। अश्नीयातां प्राग्वत्सापाकरणात् ।२। यदन्यन्मांसलवणमिथुनमापेभ्यो येन च द्रव्येण यक्ष्यमाणः स्यात् ।३। ॥१॥

अग्नीनन्वादधातीष्टिपशुपर्वसु पूर्वेद्युः ।१। आहवनीये महाव्याहृत्योत्तमया ।२। प्रथमया गार्हपत्ये ।३। दक्षिणाग्नौ मध्यमया ।४। वेदे च तूष्णीम् ।५। आहवनीये द्वयमौ समस्ताभिः ।६। महाव्याहृतीनां वा स्थाने चतस्रो विहव्यस्यानुपूर्व्येण ।७। उपस्थानं च शेषेण ।८। अप नः शोशुचदघमिति षडृचेन यस्त्वा हृदा त्वं नो अग्ने अधराविति वा द्वाभिः ।९। प्राग्नये वाचमिमं स्तोममिति चोपस्थानं सूक्ताभ्याम् ।१०। तूष्णीं प्रागहोमम् ।११। महाव्याहृतिभिः पैङ्ग्यम् ।१२। कौषीतकं विहव्येन ।१३। आरुणमुत्तमम् ।१४। ॥२॥

पिण्डपितृयज्ञो ऽपराह्णे ऽमावास्यायाम् ।१। दक्षिणाग्नेः पुरस्तात्कूर्पं स्थालीं स्फ्यं पात्रीमुलूखलमुसले च संसाद्य ।२। गार्हपत्यस्य पश्चाद्दक्षिणाग्रेषु कुशेषु स्फ्यं निधाय ।३। उपरिष्टाद्व्रीहीन्पात्र्याम् ।४। पुरस्तात्कूर्पे स्थालीम् ।५। आच्य सव्यं जानु नीचा मुष्टिना व्रीहीन् गृह्णाति पितॄन्ध्यायन् ।६। यथाधोबिलाद्धृतः स[7] स्वात्पत्न्या सकृत्फलीकृतान्[8]दक्षिणाग्नौ श्रपयित्वा[9]भिघार्य[10] प्रत्यगुदास्या[11]वसिच्य परिसमुह्य परिस्तीर्य पर्युक्ष्य[12] दक्षिणं जान्वाच्य[13] यज्ञोपवीती प्राङासीनो मेक्षणेन जुहोति । [14]८। * ॥३॥

* Comm. पत्न्या सकृत्फलीकृतानित्यारभ्य जुहोतीत्यन्तं सूत्रं यद्यपि ह्यष्टप्रत्ययानि षड्धा व्याख्यायन्ते ।

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते पितृमते स्वाहेति ।१। मेक्षणमनुप्रहृत्य[2] दक्षिणा दक्षिणाग्रैरपहता असुरा रक्षांसि वेदिषद इति स्फ्येनोन्मृज्या[3]भ्युक्ष्य[4]

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति।

परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् ॥

इत्युल्मुकमुन्मृज्य दक्षिणार्धे निधाय[5] मूले कुशान्सकृल्लूनानुन्मृष्टे निधाया[6]मावयनेनिक्ष्व ये च त्वामत्रान्विति पितुर्नामादिश्य कुशेष्वपो निषिञ्चत्यवाचीनपाणिना*।२।[7] एवं दक्षिणतः पितामहस्य।३।[8] प्रपितामहस्य च।४।[9] अथावेतत्ते ये च त्वामत्रान्विति पिण्डान्यथावनेजितं निधाय।५।[10] उभावेकस्मिन्पितृभेदे।६।[11] नं जीवपितुरस्ति।७।[12] न जीवान्तर्हिताय।८।[13] येभ्यो वा पिता तेभ्यः पुत्रः।९।[14] होमान्तं वा।१०।[15] अत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति।११।[16] उदङ्पर्यावृत्य।१२।[17] चिरा तमनाद्वासित्वा।१३।[18] अमीमदन्त पितरो यथाभागमवीवृषन्तेति प्रतिपर्यावृत्य।१४।[19] तथैवावनेज्य।१५।[20] ॥४॥

नमो वः पितरो जीवाय नमो वः पितरः शोषाय। नमो वः पितरो घोराय नमो वः पितरो रसाय। नमो वः पितरो बलाय नमो वः पितरो मृत्यवे। नमो वः पितरो मन्यवे नमो वः पितरः स्वधायै। नमो वः पितरः पितरो नमो वः। ये ऽत्र पितरः पितरः स्थ यूयं तेषां श्रेष्ठा भूयास्थ। य इह पितरो मनुष्या वयं तेषां श्रेष्ठा भूयास्म। या अत्र पितरः स्वधा युष्माकं सा। य [illegible] पितर

---

* Comm. मेक्षणमनुप्रहृत्य। इत्यारभ्यावाचीनपाणिनेति सूत्रान्तः। अत्रमन्त्रु मात्रापन्ने ह्यानानि प्रतिपत्तिकार्यम्।

एधतुरस्माकं च। मदन्तः पितरो दत्तेति।१। एतद्वः पितरो वास इति वध्यं पितर इति चौणि सुचाग्रमुपन्यस्य।२। ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत नः पितॄनित्युदकशेषं निनीय।३। अवघ्राय पिण्डान्।४। अवधाय प्राश्नीयात्।५। ब्राह्मणाय वा दद्यात्।६। अप्सु वाभ्यवहरेत्।७। मध्यमपिण्डं पत्नी पुत्रकामा प्राश्नीयात्।

आ धत्त पितरो गर्भं कुमारं पुष्करस्रजम्।
यथेह पुरुषो ऽसत्॥

इति।८। उल्मुकमग्नौ कृत्वा।९। यज्ञदाच्छिन्नमनुमन्त्रय।१०। अग्निहोत्रं यथार्थेव सायंप्रातः।११। स्वयंहोमश्च पर्वणि।१२। एतेनैव धर्मेणानाहिताग्नेः पिण्डपितृयज्ञः[13] क्रियेत।१३[14]॥५॥

दक्षिणतोन्यायं ब्रह्मकर्म।१। पश्चात्तु पित्र्यायाम्।२। यजमाननिमित्तो विपर्ययः।३। अग्रेण यजमानमासनम्।४। समानं चोत्तरणनिरसनम्।५। तयोपवेशनम्।६। कर्मादौ देशग्रहणं च।७। प्राग्गता विकारः।८। बृहस्पतिर्ब्रह्मा स यज्ञं पातु स यज्ञपतिं स मां पातु बृहस्पतिर्देवो ब्रह्माहं मानुषो भूर्भुवः स्वरोऽमित्युपविश्य।९। साद्यं च सर्वकर्मणाम्।१०। समस्तत्तु वाग्यमनम्।११। सर्वासु गतिषु यथा प्रजन्त्यन्यथा ततः प्रत्यायन्ति।१२। अनुप्रमेत्यग्नौ प्रणीयमाने।१३। सहैवोपवेशनम्।१४। अपो ब्रह्मणो ऽन्याधेये।१५। सर्वेषां वा।१६। कर्मप्रस्तावामन्त्रित ओमित्युक्त्वा यथाकर्म प्रसौति।१७।॥६॥

प्रणीताकाले वाग्यमनम्।१। हविष्कृता विसर्गः।२। दृष्टे च स्विष्ट-

शंय्वनुयाजप्रसवेन विसर्गः ।३। मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्ष्य ।४। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति प्रतिगृह्य ।५। पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति प्राग्दण्डं स्थण्डिले निधाय ।६। उपकनिष्ठिकयाङ्गुष्ठेन च प्राशित्रं गृहीत्वा ।७। अग्नेष्ट्वास्येन प्राश्नामीति प्राश्यासंखादन् ।८। शान्तिरसीत्याचम्य ।९। प्राणान्संमृशति ।१०। प्राणपा असि प्राणं मे पाहीति नासिके मुखं च ।११। चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषी ।१२। श्रोत्रपा असि श्रोत्रं मे पाहीति श्रोत्रे ।१३। इन्द्रस्य त्वा जठरे सादयामीति नाभिम् ।१४। को ऽदात्कस्मा अदात्कामो ऽदात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्त इत्यन्वाहार्यं प्रतिगृह्य ।१५। ब्रह्मन्प्रस्थास्यामीत्युक्तः ।१६। देव सवितरेतत्ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव देवेन सवित्रा प्रसूत इति जपित्वा प्रतिष्ठेति प्रसौति ।१७। प्रणीतास्तु विमुक्तास्तूत्सर्जनं ब्रह्मणः ।१८। प्राशनं ब्रह्मभागस्य ।१९। ॥७॥

अदब्धेन त्वा चक्षुषावपश्यामि रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायाग्नेर्जिह्वासि सुभूर्देवेभ्यो धाम्नेधाम्ने मे भव यजुषेयजुष इत्याज्यमवेक्षते पत्नी ।१। तेजो ऽसि शुक्रमस्यमृतमसि वैश्वदेवमसीत्याज्यं वेदौ यजमानः ।२। ध्रुवा असदन्नृतस्य योनौ सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिमित्यासन्नानि हवींष्यभिमृश्य ।3। * पाहि मां यज्ञन्यमित्यात्मानम् ।4। दृंहिरसि पाप्मानं मे

* See the following annotation.

वस्व विद्यामि विद्य मे पाप्मानमित्याचम्य ।[5] अग्ने व्रतपते व्रतं
चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमीत्या-
हवनीये समिधमाधाय वाचं यच्छति * ।[6] ३। अग्ने वायो विष्णु-
चन्द्रमः सलोकतां वो ऽशीयेति ध्यायात् ।[7] ४। यत्कामो वा स्यात्
।[8] ५। अनुपदस्यमन्नाद्यमाशवानीत्याकाशं समुद्रं वा ।[9] ६। ॥८॥

मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानः सचन्ताम् ।
अस्माकं सन्त्वाशिषः सत्या नः सन्त्वाशिषः ॥

इतीलायामुपहूयमानायाम् ।१। अथ पिन्वस्व प्राणं मे पाहि प्रजां मे पाहि पशून्मे पाहि ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व दिशां क्लृप्तिरसि दिशो मे कल्पन्तां कल्पन्तां मे दिशस्तास क्लृप्तास राध्यासम् । अत्र पितरो मादयध्वं यथाभागं पितर आवृषायध्वमिति बर्हिषदं पुरोडाशमभिमृश्य ।२। अमीमदन्त पितरो यथाभागमवीवृषन्तेति प्रत्यवधाय ।३। प्रजापतेर्भागो ऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्ठा अमुत्रा मुष्मिंल्लोक इह चेत्यन्वाहार्यमभिमृश्य ।४। अनुयाजेष्विष्टेषु व्यूहति स्रुचावग्नेरग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीत्युत्तानेन दक्षिणेन जुहूं प्राचीमग्निरग्नीषोमौ तमपनुदन्तु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति नीचा सव्येनोपभृतं प्रतीचीम् ।५। यथादेवतमन्यत्र ।६। अनिष्टे गृहपतौ गार्हपत्ये स्रुवेण जुहोति ।७। ॥९॥

यं वां देवा अकल्पयन्नूर्जो भागं शतक्रतू ।
इदं वां तेन प्रीणामि तस्य तृम्पतमहाहाऊर्ह स्वाहा

* Comm. यच्छतीति सूत्रान्तः; यच्छत्युपान्ते । क्रमवर्तित्वाद्वाचः ।

गन्धर्वाभ्यां नारीष्टाभ्यामहाहाहूहूभ्यां स्वाहा । अग्ने पृथिव्या अधिपते वायो ऽन्तरिक्षस्याधिपते सवितः प्रसवानामधिपते सूर्य नक्षत्राणामधिपते सोमौषधीनामधिपते त्वष्टः समिधां रूपाणामधिपते मित्र सत्यानामधिपते वरुण धर्माणामधिपत इन्द्र ज्येष्ठानामधिपते प्रजापते प्रजानामधिपते देवा देवेषु पराक्रमध्वम् ।१। प्रथमा द्वितीयेषु पराक्रमध्वमित्येवमेकोत्तरमैकादशभ्यः ।२। विश्वे देवास्त्रयस्त्रिंशास्त्रिरेकादशिन उत्तरोत्तरकर्माण उत्तरसत्रामो विश्वे वैश्वानरा विश्वे विश्वमहस इह मावताग्निमब्रह्मण्यस्मिन्क्षत्रे ऽस्मिन्कर्मण्यस्यामाशिष्यस्यां प्रतिष्ठायामस्यां देवहूत्यामयं मे कामः समृध्यतां स्वाहेति यत्कामो भवति ।३। प्रजापत इति चतुर्थी ।४। ॥१०॥

आ प्यायतां ध्रुवा हविषा घृतेन यज्ञंयज्ञं प्रति देवयद्भ्यो ।
सूर्याया ऊधो ऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्॥

इत्याप्यायति ध्रुवाम् ।१। समिष्टयजुर्हूयमानमन्वारभते ।२। सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितिरसि मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इह चेति पूर्णपात्रमभिमृश्य दिशो व्युदुक्षति ।३। प्राच्या दिशा सह देवा ऋत्विजो मार्जयन्ताम् ।४। दक्षिणया दिशा सह मासाः पितरो मार्जयन्ताम् ।५। प्रतीच्या दिशा सह गृहाः पशवो मार्जयन्ताम् ।६। उदीच्या दिशा सहाप ओषधयो वनस्पतयो मार्जयन्ताम् ।७। ऊर्ध्वया दिशा सह यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तामिति ।८। सहस्रवृदनन्तरेण दिर्दिश्कृष्णीम् ।९। आपो हि ष्ठीयाभिस्तिसृभिरभिमृश्य ।१०। अच्छायं वो मरुतो राजसेति प्राचीर्निनीयोदीचीर्वा ।११।

समुद्रं वः प्र हिणोमि स्वां योनिमभि गच्छत ।
अरिष्टा अस्माकं वीरा मा परा सेचि नो धनम् ॥

इत्यभिमन्त्र्य[12] । शंनोदेवीयाभिस्तिसृभिरपो ऽभिमृश्य[13] । समिन्द्र णः

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा सुदत्रो वि दधातु राय

इति प्राणाम्[14] ।

अनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥

इति मुखं विमृज्य[15] ॥ ११ ॥

विष्णुक्रमान्क्रमते * ।[16] ६ । दक्षिणाद्वेदेः श्रोणिदेशादाहवनीयात् ।१। दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा तमहमनु व्यक्रंसि ततो निर्भक्तः स यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यभ्युद्धृत्य दक्षिणं पादं हीनतरं प्रथमम् ।२। अन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसेति द्वितीयम् ।३। पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण छन्दसेति तृतीयम् ।४। दिक्षु विष्णुर्व्यक्रंस्तानुष्टुभेन छन्दसेति तिर्यग्विक्रामति ।५। समान उदर्कः ।६। अगन्म स्वरिति प्राङीक्षते ।७। सं ज्योतिषाभूमेत्याहवनीयम् ।८। समहं प्रजया सं मया प्रजा समहं रायस्पोषेण सं मया रायस्पोषो वसुयंज्ञो वसीयान्भूयासमिति प्राङेव ।९। स्वयंभूरसि श्रेष्ठो रश्मिरायुर्दा अस्यायुर्मे देहि वर्चोदा असि वर्चो मे देहि तनूपा असि तन्वं मे पाहीदमहमाभ्यो दिग्भ्यो ऽस्यै दिवो ऽस्मादन्तरिक्षादस्यादन्नाद्यादस्यै प्रतिष्ठायै द्विषन्तं भ्रातृव्यं निर्भजामि निर्भक्तो द्विष-

* Comm. आपोहिष्ठीयाभिस्तिसृभिरभिमृश्य । विष्णुक्रमान् क्रमत इत्येतदन्तं सूत्रं । स्पष्टानि सञ्ज्ञो व्याख्यायन्ते ।

भ्रातृव्य इत्यादित्यमुपस्थाय [10] * ऐन्द्रीमावृतमावर्त आदित्यस्यावृत-मन्वावर्त इति दक्षिणं बाहुमन्वावृत्य [11] प्रत्यावृत्य गार्हपत्यम् [12] अग्ने गृहपते सुगृहपतिरहं त्वयाग्ने गृहपतिना भूयासं सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः ।

अस्थूरि णौ गार्हपत्यानि सन्तु ।

शतं हिमा सह्यमस्यादिति पुत्रनामान्यभिव्याहृत्य [13] भूर्भुवः स्वः सं मा कामेन गमयेत्यङ्गारमुपस्पृश्य [14]

यज्ञो बभूव स आ बभूव स प्र जज्ञे स उ वावृधे पुनः ।
स देवानामधिपतिर्बभूव सो ऽस्मानधिपतीन्कृणोतु ॥

इति जपित्वा [15] तथैवाचम्य [16] अग्ने व्रतपते व्रतमचारिषं तदशकं तेनाराध्मं य एवास्मि सो ऽस्मीत्याहवनीये समिधमाधाय [17] विसृज्य वाचं [18] ॥१२॥

यो नो दूरे देष्टि यो नो अन्ति समानो निष्ट्यो अरणस्त्वदग्ने ।
इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन ॥

इत्याहवनीयस्य विद्यामाप्नुपसमस्य [19] गोमाँ अग्न इति तृचं जपति [20] उदयं तच्चक्षुः संदृश्यते मा च्छित्सि यत्ते तपस्तस्मै ते मा वृश्चीत्या-दित्यमुपस्थाय [1] † तथैवावृत्य [2] प्रत्यावृत्योपविश्य [3]

इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये ।
आत्मसनि प्रजासन्यभयसनि पशुसनि लोकसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥

* Comm. आदित्यमुपस्थाय । जपतीति छन्दोभेद । छन्दांसि पर्यायो व्याख्यायन्ते ।

† Comm. प्रजातिकाम इति सूत्रान्तः ।

इति पयोभक्षं प्रजातिकामः ।१[4]। दधिक्राव्णो अकारिषमिति वा संभृतप्रपन्दधिभक्षम् ।२[5]। सं यज्ञपतिराशिषेति यजमानभागं प्राश्नाति ।३[6]। समिष्टयजुषा सह प्रचरति जुहोति ।४[7]। ॥१३॥

जीवतः कर्माणि ।१। विप्रवासे चेदभिप्रेयान्मरणान्तमेकाहेषु नास्ति तस्य समापनम् ।२। आहवनीये सर्वाणि हवींष्यनुप्रहृत्य ।३। संहार्य रोमनखानि प्रेतस्य ।४। स्नापयित्वालंकृत्य ।५। दक्षिणस्यां दिशि दक्षिणाप्रवणे देशे दक्षिणप्राक्प्रवणे [न] वा ।६। अपेत वीतेति पलाशशाखया विहृत्य ।७। इध्मेनोद्धृत्याभ्युक्ष्य ।८। प्राग्दक्षिणायतां चितिं कृत्वा ।९। पुरस्तादाहवनीयं पश्चान्निधाय गार्हपत्यं दक्षिणतो दक्षिणाग्निम् ।१०। अन्तरेण गार्हपत्यं दक्षिणाग्निं च हृत्वा ।११। उत्तानं चितौ निपात्य ।१२। दक्षिणतः पश्चाद्वा गामनुस्तरणीमजां वा रोहिणीं दक्षिणामुखीं प्रोक्ष्य ।१३। जीवन्त्याः संज्ञप्ताया वा वृक्कौ पृष्ठत उद्धृत्य ।१४। अन्वाहार्यपचने कर्षोष्णौ कृत्वाति द्रवेत्युग्भ्यां पाण्योराधाय ।१५। प्राणायतनेषु हिरण्यशकलान्कृत्वा ।१६। अग्नेर्वर्मेति वपया मुखं प्रच्छाद्य ।१७। दक्षिणे पाणौ जुहूम् ।१८। उपभृतं सव्ये ।१९। ध्रुवामुरसि ।२०। अग्निहोत्रहवणीं कण्ठे ।२१। स्रुवौ नासिकयोः ।२२। प्राशित्रहरणं दक्षिणे कर्णे ।२३। प्रणीताप्रणयनं सव्ये ।२४। शिरसि कपालानि ।२५। अप्सु ग्रावाणः ।२६। उदरे समवत्तधानीम् ।२७। पार्श्वयोः पात्र्यौ ।२८। स्फ्यं दक्षिणे पार्श्वे ।२९। कृष्णाजिनं सव्ये ।३०। उपस्थे अरणी ।३१। ऊर्वोरष्ठीवतोश्चोलूखलमुसले ।३२। पादयोः शूर्पशकटे ।३३। पत्तो ऽग्निहोत्रपात्राणि ।३४। तानि घृतेन पृषदाज्येन च पूरयित्वा ।३५। अयं वै

त्वमस्मादयं ते योनिस्त्वमस्य योनिः । जातवेदो वहस्वैनं सुकृतां यत्र लोकः । अयं वै त्वामजनयदयं त्वदधिजायतामसौ स्वाहेत्युपोहन्त्यग्निभिः ।२६। ॥१४।

मैनमग्न इति संप्रदीप्ते दक्ष जपित्वा सव्यावृतो ऽनवेक्षमाणाः प्रागुदञ्चः प्रक्रामन्ति ।१। मृत्योः पदमित्यनुमन्त्रयते द्वाभ्याम् ।२। आपो हि ष्ठा यना च सोमेत्युदकं सृप्नन्ति सूक्ताभ्यामनमस्निमज्जन्तो ऽसंधावमानाः ।३। अथापेतस्त इत्येकमुदकाञ्जलिं प्रदाय [4] * आपो अस्मानित्युत्क्रम्य [5] अहतं वासः परिधाय [6] तच्चक्षुरित्यादित्यमुपस्थाय [7] कनिष्ठपूर्वाः प्रत्यायन्ति ।[8]४। उदपात्रे दूर्वायवसर्षपाण्योप्यार्द्रे गोमये निधायागन्मतीत्यश्मानमग्निमुदपात्रं च संस्पृशन्ति ।[9]५। अधः-शय्या हविष्यभक्षणा प्रत्यूहनं च कर्मणां वैतानिवर्जमेकरात्रं त्रिरात्रं नवरात्रं वाऽऽ वा संचयनाद्व्रतानि ।[10]६। नाघाहानि वर्धयेयुरिति ह स्माह कौषीतकिः ।[11]७। अपरपक्षे संचित्यायुजासु रात्रिषु [12] † यं त्वमग्न इति द्वाभ्यां क्षीरेणोदकेनास्थीनि निर्वाप्य [13] पुराणे कुम्भे शरीराण्योप्य [14] उत्ते स्तभ्नामीति लोष्टेनापिधाय [15] उच्छ्वञ्चस्वेति खाते निधाय [16] उच्छ्वञ्चमानेति परिमिते ऽवधाय [17] अरण्ये निखनन्ति ।[18]८। शरीरेष्वदृश्यमानेषु त्रीणि षष्टिशतानि पलाशवृन्तानि ।[19]९। तेषामावापस्थानम् ।१०। चत्वारिंशच्छिरसि ।[20]११। ग्रीवायां दश ।[21]१२। अंसान्वंसयोर्बाह्वोः शतम् ।[22]१३। उरसि त्रिंशत् ।[23]१४। जठरे विंशतिः ।[24]१५। वृषणयोः ।[25]१६। शिश्ने चत्वारि ।[26]१७। ऊर्वोः

* Comm. प्रत्यायन्तीति सूत्रच्छेदः । उपस्थापि तु सर्वत्र पठ्यते ।
† अरण्ये निखनन्तीति सूत्रच्छेदः ।

शतम ।[27]१७। त्रिंशज्जान्वष्ठीवतोः ।[28]१८। पादाङ्गुलीषु विंशतिः ।[29]१९। एवं त्रीणि षष्टिशतानि भवन्ति ।[30]२०। पुरुषाकृतिं कृत्वोर्णासूत्रैः परिवेष्ट्य यवचूर्णैः प्रलिप्य सर्पिषाभ्यज्याग्निभिः संस्कुर्वन्ति ।[31]२१। दक्षिणपूर्वां पूर्वमारणीमग्निभिः संहृत्य सांतपनेन वाम्यामानीय ततः पुनरादधीत ।[32]२२। ॥१५॥

कृतापवर्गे परिधिकर्म ।१। आनडुहं रोहितं चर्मोदग्ग्रीवं प्राग्ग्रीवं वोत्तरलोम पश्चादग्नेरुपस्तीर्योपविशन्ति कुशाग्र्येवमयाम् ।२। अन्तरेणाग्निं चैतांश्चाश्मानमश्मानं निधाय ।[3]* शम्याः परिधीन्कृत्वा ।[4] शमीमयमिध्मं पालाशं वा ।[5] वारणेन स्रुवेण कांस्येन वा जुहोति ।[6]३। उपस्पृशतः समन्वारब्धेषु ।[7]४। इमं जीवेभ्यः

परैतु मृत्युरमृतं न आ गाद्वैवस्वतो नो अभयं कृणोतु ।
पर्णं वनस्पतेरिवाभि नः शीयतां रयिः ।
सचतां नः शचीपतिः ॥

याज्यारूपे इत्यान्वाधान इति ।[8]५। द्वादश कृत्वा ।[9]† ययाह्नानीति दक्षिणमर्धं द्वाभ्यां समीक्ष्य ।[10] अञ्जनं सर्पिषा संनिनीय ।[11] कुशैः स्त्रीणामक्षीण्यनक्तीमा नारीरिति ।[12] महतस्कमन्त्रेण दिदिंस्थूणीम् ।[13]६। उत्तिष्ठ ब्रह्मणस्पत इति द्वाभ्यां ब्राह्मणस्य दक्षिणं बाहुमन्वारभ्यानुत्तिष्ठतोऽनुमन्त्रयते ।[14]७। अनडुहो वा पुच्छम् ।[15]८। अनड्वानहतं वासः कांस्यं दक्षिणा ।[16]९। दक्षिणतो वित्तं नि वर्तध्वमिति सूक्तेन सव्येनाः प्रदक्षिणं त्रिः पर्यैति ।[17]१०। प्रत्येनमपि परिधिकर्म ।[18]११। ॥१६॥

---

* Comm. कुर्वीतेति सूत्रान्तः ।

† Comm. सुष्वीमित्येवमन्तं सूत्रं । अथाध्वस्तु व्याख्या क्रियते ।

रुद्रं गवा यजते स्वस्त्ययनाय ।१। शूलगव इत्याचक्षते ।२। शुक्लपक्ष उपोष्य पुष्ये नक्षत्रे प्रागुदीच्यां दिशि ।३। अग्निं मथित्वा प्राञ्चं प्रणीय ।४। पुरस्तात्पलाशशाखां सपलाशां निखाय ।५। तस्या उत्तरतः पशुमुपस्थाप्य ।६। रुद्राय त्वा जुष्टमुपाकरोमि ।७। रुद्राय त्वा जुष्टं प्रोक्षामि ।८। रुद्राय त्वा जुष्टं नियुनज्मीति नियुनक्ति पलाशशाखायाम् ।९। पर्यग्निकृतमुदञ्चं नयन्ति ।१०। तं संज्ञपयन्ति प्राक्शिरसमुदक्पादं प्रत्यक्शिरसं वोदक्पादमरवमाणम् ।११।

यत्पशुर्मायुमकृतोरो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो जातवेदाः प्र मुञ्चतु ॥

स्वाहेति रवमाणे जुहोति ।१२। वपामुद्धृत्य प्रचाल्य[13] पूर्वं अग्नौ श्रपयित्वा[14]भिघार्योद्वास्य[15] स्विष्टं स्विष्टमिति त्रिः पर्युक्ष्या[16]ज्याहुतीर्जुहोति ।१३[17]। ॥१७॥

या तिरश्ची नि पद्यते अहं विधरणी इति ।
तां घृतस्य धारया यजे संराधनीमहम् ॥

स्वाहा ।१।

यस्येदं सर्वं तमिमं हवामहे ।
स मे कामान्कामपतिः प्र यच्छतु ॥

स्वाहेति द्वितीयाम् ।२। अग्ने पृथिव्या अधिपत इति तृतीयाम् ।३। प्रजापत इति चतुर्थीम् ।४। त्रीणि पलाशपलाशानि मध्यमानि संहृत्योपस्तीर्य[5] ।* वपामवधायाभिघार्य[6] ।

* Comm. समूहरति पलाशानीति सूत्रान्तः ।

यावतामहमीशे यावन्तो मे अमात्याः।
तेभ्यस्त्वा देव वन्दे तेभ्यो नो देव मृल॥

वेद ते पितरं वेद मातरं द्यौस्ते पिता पृथिवी माता। तस्मै ते देव भवाय शर्वाय पशुपतय उग्राय देवाय महते देवाय रुद्रायेशानायाशनये स्वाहेति वर्षा कृत्वा। ७ अनुप्रहरति पलाशानि। ८। सपाश्यपर्णौ च। ९। दर्शाय ते प्रतिदर्शाय स्वाहेत्युत्तरामाज्याहुतिं हुत्वा तथैव पर्युक्षति। १०। पश्चिमे ऽग्नौ स्थालीपाकं श्रपयति। ११। उत्तरतो ऽवदानानि। १२। स्थालीपाकं यूपं मांसमाज्यमिति संनिनीय शंयोः शंयोरिति त्रिः पर्युक्ष्य जुहोति। १३। ॥१८॥

भवाय स्वाहा शर्वाय स्वाहा रुद्राय स्वाहेशानाय स्वाहाग्नये स्विष्टकृते स्वाहेति।१। तथैव पर्युक्ष्य।२। तान्येव संनिनीय।३। अग्नौ पश्चिमे।४। भवान्यै स्वाहा शर्वाण्यै स्वाहा रुद्राण्यै स्वाहेशानान्यै स्वाहाग्नाय्यै स्वाहेति।५। समानं पर्युक्षणम्।६। पत्त्रा विकर्तनात्पलाशानि प्रागुदञ्चि निधाय* । ७ तेषु लोहितमिश्रमूवध्यमवधाय । ८ रुद्रसेनाभ्यो ऽनुदिशति। ९। आघोषिण्यः प्रतिघोषिण्यः संघोषिण्यो विचिन्वत्यः श्वसनाः क्रव्याद एष वो भागस्तं जुषध्वं स्वाहेति। १०। यजमानस्तोपतिष्ठते। ११। ॥१९॥

भूपते भुवपते भुवनपते भूतपते भूतानां पते महतो भूतस्य पते मृल नो द्विपदे च चतुष्पदे च पशवे मृल नश्च द्विपदश्च चतुष्पदश्च पशून्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो दुरापूरो ऽसि मह्याया अधि-

---

* Comm. अनुदिशतीति सूत्रान्तः।

मासेन। तस्य ते धनुर्हृदयं मन इषवश्चक्षुर्विसर्गस्तं त्वा तथा वेद नमस्ते अस्तु सोमस्त्वावतु मा मा हिंसीः।

यावरण्ये पतयतो वृकौ जञ्जभताविव।

महादेवस्य पुत्राभ्यां भवशर्वाभ्यां नमः॥१॥

कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति च सूक्तानि।२। वरो दक्षिणा।३। उपाकरणं प्रोक्षणं पर्यग्निकरण-मित्याद्यतः पाशुबन्धिकः।४। पलाशशाखेति देवतायै वपां देवतायै हविः स्विष्टकृते चान्येषां पशूनाम्।५। आग्नेयः सौम्यश्चाज्यभागौ देवतायै वपां देवतायै हविः स्विष्टकृते चाज्याहुतिश्चानुमतये स्थालीपाकानाम्।६।॥२०॥

षलर्घ्या भवन्त्याचार्य ऋत्विक् श्वशुरो राजा स्नातकः प्रिय इति।१। उदङ्मुखः प्राङ्मुखो वा

अहं वर्ष्म सदृशानां विद्युतामिव सूर्यः।

इदं तमधि तिष्ठामि यो अस्माँ अभि दासति॥

इति कूर्चमथास्ते अधितिष्ठति वा।२। विराजो दोहो ऽसि विराजो दोहमशीय मयि पद्यायै विराजो दोह इति पाद्यं प्रतिगृह्य।३। अर्घ्यमित्युक्ते ऽपः प्रतिगृह्य।४। आचमनीयमित्युक्त आपोहिष्ठीया-भिस्तिसृभिरेकैकयाचम्य।५। मधुपर्कं इत्युक्ते यथा प्राश्नं तथा प्रतीक्ष्य।६। तथा प्रतिगृह्णाति। यशसे ब्रह्मवर्चसायेति विकारः।७। प्रतिगृह्य सव्ये पाणौ कृत्वाङ्गुष्ठेनोपकनिष्ठिकया च पूर्वार्धादुपहृत्य पूर्वार्धे कांस्यस्य निमिम्पति वसवस्त्वाग्निराजानो भक्षयन्त्विति।८। पितरस्त्वा यमराजानो भक्षयन्त्विति दक्षिणार्धाद्दक्षिणार्धे।९।

आदित्यास्त्वा वरुणराजानो भक्षयन्त्विति पश्चार्धात्पश्चार्धे ।१०। रुद्रास्त्वेन्द्रराजानो भक्षयन्त्वित्युत्तरार्धादुत्तरार्धे।११। विश्वे त्वा देवाः प्रजापतिराजानो भक्षयन्त्विति मध्यादूर्ध्वम्।१२। मक्तसुकनमन्त्रेण द्विर्द्विस्तूष्णीम्।१३। महाव्याहृतिभिस्तिसृभिरेकैकया प्राश्य।१४। अनुपाय चतुर्थम्।१५। ब्राह्मणायोच्छिष्टदानम्।१६। सर्वपानं वा।१७। अपो ऽन्नाभ्यवहरणम् ।१८। शंनोदेवीयाभिस्तिसृभिरपो ऽभिमृश्य ।१९। समानं प्राणसंमर्शनम् ।२०। मुखविमार्जनं च ।२१। आ गोः प्रवदनात्तूष्णीम् ।२२। गौरित्युक्ते[23] ओं कुरुत ।[24]२३। माता रुद्राणामिति जपित्वोत्सृजत तृणान्यत्त्विति वा ।[25]२४। कूर्चः पाद्यमर्घ्यमाचमनीयं मधुपर्को गौरिति वेदयेत वेदयेत ।[26]२५। ॥२१॥

इति शाङ्खायनश्रौतसूत्रे चतुर्थो ऽध्यायः समाप्तः ।

# ओम् ।

आर्षेयान् यूनोऽनूचानानृत्विजो वृणीते सोमेन यक्ष्यमाणः ।१। चतुरः सर्वान्वा ।२। चन्द्रमा मे दैवो ब्रह्मेत्युपांशु त्वं मानुष इत्युच्चैः ।३। एवं सर्वान् ।४। आदित्यो मे दैव उद्गाता त्वं मानुषः ।५। अग्निर्मे दैवो होता त्वं मानुषः ।६। वायुर्मे दैवोऽध्वर्युस्त्वं मानुषः ।७। प्रजापतिर्मे दैवः सदस्यस्त्वं मानुषः ।८। ऋतवो मे दैव्या होत्राशंसिनो यूयं मानुषाः ।९। भर्गं मे वोचो भद्रं मे वोचो भूतिं मे वोचः श्रियं मे वोचो यशो मे वोचो मयि भर्गो मयि भद्रं मयि भूतिर्मयि श्रीर्मयि यश इति वृतो जपित्वा कच्चिन्नाहीनानुदेश्यस्त्वार्त्विज्यनीनदक्षिणानामन्यतम इति पृष्ट्वा प्रतिगृह्णोति प्रत्याचष्टे वा ।१०। ॥१॥

प्राचीनप्रवणं देवयजनम् ।१। प्रागुदक्प्रवणं यज्ञकामस्य ।२। अनुसृत्यन्व होताहवनीयमादित्यमपश्य पश्येत्तद्ब्रह्मवर्चसकामस्य ।३। शुक्लपक्षे दीक्षा पुण्ये नक्षत्रे समापनं च ।४। ॥२॥

अपराह्णे दीक्षणीयाग्नावैष्णवीष्टिः ।१। पौर्णमासीविकारः ।२। पञ्चदशसामिधेनीका ।३। उपांशुहविः ।४। विराजौ स्विष्टकृतः ।५। नित्ये वा ।६। उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्त इत्याशिषां स्थान इडायां सूक्तवाके च प्राक्कातीयवर्त्तिक्याः पुरोला-

शालायाः ।७। न सूक्तवाके यजमानस्य नाम गृह्णाति प्राक् सवनीयात् ।८। पत्नीसंयाजान्ता च ।९। ॥३॥

अध्वर्युमन्वारभ्यौदुग्रभणानि जुहुयात् याजमानं मनो मे मनसा दीक्षतां वाङ्मे वाचा दीक्षतां प्राणो मे प्राणेन दीक्षतां चक्षुर्मे चक्षुषा दीक्षतां श्रोत्रं मे श्रोत्रेण दीक्षतामिति ।१। आकूतीर्वा जुहुयात् ।२। एकदीक्षे चोपस्थानम् ।३। मनो दीक्षामुपैमीत्याहवनीयम् ।४। वाचं दीक्षामुपैमीति गार्हपत्यम् ।५। प्राणं दीक्षामुपैमीति दक्षिणाग्निम् ।६। अपरिमिता दीक्षास्तासामपवर्गे ॥४॥

प्रायणीयेष्टिः ।७। पथ्यां स्वस्तिमग्निं सोमं सवितारं चाज्येनादितिं चरुणा ।१। स्वस्ति नः पथ्यासु स्वस्तिरिद्धि [2]। अग्ने नयाग्ने त्वं पारय [3]। त्वं सोम प्र चिकितो या ते धामानि हविषा [4]। तत्सवितुर्वरेण्यं य इमा विश्वा जातानि [5]। सुत्रामाणं महीमू षु ।[6]२। पञ्चदशसामिधेनीका ।[7]३। उपांशुहविः ।[8]४। नाज्यभागौ भवतः ।[9]५। त्वां चित्रश्रवस्तम यद्वाहिष्ठमिति स्विष्टकृतः ।[10]६। शंय्वन्ता च ।[11]७। ॥५॥

क्रीत्वा राजानमाधाय शकटे सोमाय पर्यूह्यमाणायेत्युक्तः ।१।

भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु ।
अथेमवस्य वर आ पृथिव्या आरे शत्रून्कृणुहि सर्ववीरः ॥

इत्यन्तरेण वर्त्मनी तिष्ठन्ननूच्य ।२। इमां धियं शिक्षमाणस्य वनेषु व्यन्तरिक्षं सोम याहि इति चतस्रो अनुब्रुवन्नन्तरेण वर्त्मनी ।३। शालामग्रेण शकटमवस्थाप्य प्रपादयन्ति राजानम् ।४। येन व्रजेयुस्तेनानुसमियात् ।५। या ते धामानि हविषेत्यनुप्रपद्य ।६। अग्रेणाहवनीयं दक्षिणा तिष्ठन्नागन्देव इति परिधाय ।७। उपसृष्टोऽसृज्यते

।८। मदन्तीभिरुदकार्थो ऽत ऊर्ध्वमाग्नीषोमप्रणयनात् ।९। ॥६॥

आतिथ्या वैष्णवीष्टिः ।१। पौर्णमासीविकारः ।२। विष्णोर्नु कं प्र तद्विष्णुः ।३। होतारं चित्ररथं यक्षा स्वध्व इति स्विष्टकृतः ।४। अग्निमन्थनीयाश्चासन्ने हविषि ।५। उपांशुहविः ।६। इडान्ता ।७। ॥७॥

उपस्पृश्य सर्वे ।१। अनाधृष्टमस्यनाधृष्यं देवानामोजो ऽनभिशस्त्यभिशस्तिपाः। अनभिशस्तेन्यमञ्जसा सत्यमुपगेषं सुविते मा धा इति सहिरण्यं ध्रौवमाज्यं प्राचीनं बर्हिष्यासन्नं तानूनप्त्रं समवमृश्य ।२। उपसृप्याग्रेणाहवनीयं परीत्यांशुमुपस्पृशन्तो राजानमाप्याययन्ते।

अंशुरंशुष्टे देव सोमा प्यायतामिन्द्रायैकधनविदे।

आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व।

आ प्याययास्मान्सखीन्सन्या मेधया स्वस्ति ते।

देव सोम सुत्यामुदृचमशीयेति ।३।

यमादित्या अंशुमा प्याययन्ति यमक्षितिमक्षितयः पिबन्ति।

तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः॥

इत्युरोऽभिमृश्य ।४। उपसृप्य दक्षिणोत्तानान्पाणीन्प्रस्तरे निधाय निह्नुवते सव्योत्तानानपराह्णे। एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्यामिति ।५। आप्यायनप्रभृत्युपसदुपसदि संस्थितायाम् ।६। ॥८॥

प्रवर्ग्यः प्रथमयज्ञः ।१। विकल्पः श्रोत्रियस्य ।२। उत्तरेण गार्हपत्यम् ।३। महावीरपात्रेषु साद्यमानेषु पूर्वया द्वारा प्राञ्चं प्रपद्य* ।

---

* पविहितोसीति पुस्तकान्तरे अधिकः पाठः।

उत्तरेणाहवनीयं खरौ पात्राणि च गत्वा ।[5] पश्चादुपोपविश्य ।[6] होत-
रभिष्टुहीत्युक्तः ।[7] अनवानमेकैकां सप्रणवामभिष्टौति ।४।[8]

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ।५।[9]
इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूम नेष्ठाः ।
तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासेः ।६।[10]
अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।
अर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वसृपा स्वरिति वा ।७।[11]

अञ्जन्ति यमिति पिन्वे ऽज्यमाने ।८।[12] सं सीदस्वेति साद्यमाने ।९।[13] भवा नो अग्ने सुमनास्तपो ष्वग्ने यो नः सनुत्य इत्यङ्गारेषूपोह्यमानेषु ।१०।[14] कृणुष्व पाज इति पञ्च ।११।[15] परि त्वा गिर्वणो ऽधि द्वयोः ।१२।[16] शुक्रं ते अन्यद्विभर्षि ।१३।[17] पतङ्गमक्तं सूक्ते द्रप्सश्चेति सूक्ते ।१४।[18] पवित्रं त इति द्वे ।१५।[19]

त्रि यत्पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु बिभ्रतः ।
समुद्रे अन्तरायवो विचक्षणं त्रिरह्नो नाम सूर्यस्य मन्वत ।१६।[20]

अयं वेन इति सूक्तं नाके सुपर्णमित्युद्धृत्य ।१७।[21] गणानां त्वेति सूक्तम् ।१८।[22] बृहद्वदेम विदथे सुवीरा इति वीरकामायै वीरं ध्यायात् ।१९।[23] का राधदिति नव ।२०।[24] आ नो विश्वाभिरूतिभिरिति तिस्रः ।२१।[25] प्रातर्यावाणेति पूर्वाह्णे सूक्तम् ।२२।[26] आ भातीत्यपराह्णे ।२३।[27] सर्वमीळेद्यावीयमुत्सृज्य वाचम् ।२४।[28] उत्तमां परिशिष्य रुचितो

तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥

इति वषट्कृते ।१२।

अपातामश्विना घर्ममनु द्यावापृथिवी अमंसाताम् ।

इहैव रातयः सन्तु ॥

इत्यनुवषट्कृते ।१३। समानमनिर्दिष्टम् ।१४। इति सोमे ब्रह्म-कर्म ।१५। ॥१५॥

इन्द्रो मरुत्वान्सोमस्य पिबतु। मरुत्स्तोमो मरुद्गणः। मरुद्वृधो मरुत्सखा। य इमेमं देवा अन्वमदन्। अपूर्वे वृत्रतूर्ये। शम्बरहत्ये गविष्टौ। अर्चन्तं गुहा सदा। परमस्यां परावति। वधीद्वृत्रं सृग-दयः। मरुतामोजसा सह। आर्द्रैर्वृत्राणि वर्धयन्। अनाधृष्टा-न्योजसा। इन्द्रं देवेभ्यो दुवः। मरुद्भिः सखिभिः सह। इन्द्रो मरुत्वाँ इह श्रवदिह सोमस्य पिबतु। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रचित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमत् ।१। अथोक्थ्यवी-र्यम् ।२। रूपमनुरूपं प्रतिरूपं सुरूपमिन्द्रेयोरयो भद्रमागछतु लोक्यमवाचीन्द्रायेति ।३। ॥१६॥

इन्द्रो देवः सोमं पिबतु। एकजानां वीरतमः। भूरिजानां तवस्तमः। हर्योः स्थाता। पृश्नेः प्रेता। वज्रस्य भर्ता। पुरां भेत्ता। पुरां दर्ता। अपां नेता। सत्वनां नेता। निजघ्निर्दूरेश्रवाः। उप-मातिदद्मनावान्। इहोऽयन्देवो बभूवान्। इन्द्रो देव इह श्रवदिह सोमं पिबतु। प्रेमां देव इति समानम् ।१। अथोक्थ्यवीर्यम् ।२। संराळसि स्वराळसि विराळसि राजास्यभिभूरस्यभिभूयास्म वयं यं द्विष्मो ऽपग्छतु लोक्यमवाचीन्द्रायेति ।३। ॥१७॥

सविता देवः सोमस्य मत्सत्। हिरण्यपाणिः सुजिह्वः। सुबाहुः स्वङ्गुरिः। त्रिरहन्सत्यसवनः। यः प्रासुवद्वसुधिती। उभे जोष्ट्री सवीमनि। श्रेष्ठं सावित्रमासुवम्। दोग्ध्रीं धेनुम्। वोढारमनड्वाहम्। आशुं सप्तिम्। जिष्णुं रथेष्ठाम्। पुरंधिं योषाम्। सभेयं युवानम्। सविता देवः परामीवां साविषत्पराघशंसम्। इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्। १। ॥१८॥

द्यावापृथिवी सोमस्य मत्सताम्। पिता च माता च। धेनुश्चर्षभश्च। धन्या च धिषणा च। सुरेताश्च सुदुघा च। शंभुश्च मयोभूश्च। ऊर्जस्वती च पयस्वती च। द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम्। प्रेमां देवी देवहूतिमवतां देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवताम्। चित्रे चित्राभिरूतिभिः। श्रुतां ब्रह्माण्यावसा गताम्। १। ॥१९॥

ऋभवो देवाः सोमस्य मत्सन्। विष्ट्वी स्वपसः। कर्मणा सुहस्ताः। धन्या धनिष्ठाः। शम्या शमिष्ठाः। शच्या शचिष्ठाः। ये धेनुं विश्वजुवं विश्वरूपामतक्षन्। अनडुहमश्वान्‌ मनुमभवद्विश्वरूपी। अयुञ्जत्‌ कनीना मदन्तः। अयुञ्जत हरी अश्वन्देवा उप। संवत्सरे स्वपसो यज्ञियं भागमायन्। ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन्ब्रह्माण्यावसा गमन्। १। ॥ २०॥

विश्वे देवाः सोमस्य मत्सन्। विश्वे वैश्वानराः। महि महान्तः। पक्कान्ना नेमनिग्रीवानः। आस्क्राः पचतवाहसः। ये द्यां च पृथिवीं

धातम्युः । अपश्च स्वश्च । ब्रह्म च क्षत्रं च । बर्हिश्च वेदिं च । यज्ञं चोरु चान्तरिक्षम् । वातात्मानो अग्निदूताः । ये स्थ त्रय एकादशासः । त्रयश्च त्रिंशच्च । त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रा । तावन्त उदरणे । तावन्तो निवेशने । तावतीः पत्नीः । तावतीर्ग्नाः । तावन्तो ऽभियाचः । तावन्तो रातिषाचः । अतो वा देवा भूयांस स्थ । मा वो देवा अविशसा मा विशसायुरा वृक्षि । विश्वे देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा इति समानम् ।१। अथोक्थ्यवीर्यम् ।२। भूतमसि भविष्यदसि विभूतमसि प्रभूतमसि सदसि चतुरस्रोजो ऽसि भद्रमसि स्तुतार्थे स्तावाचौन्द्राग्योक्थ्यं देवेभ्यः ।३। ॥२१॥

अग्निर्वैश्वानरः सोमस्य मत्सत् । विश्वेषां देवानाम् समित् । अजस्रं दैव्यं ज्योतिः । यो विड्भ्यो मानुषीभ्यो दीदेत् । क्षुपु पूर्वासु दिद्युतानः । अजर उषसामनीके । आ यो द्यां भात्या पृथिवीम् । ओर्वन्तरिक्षम् । ज्योतिषा यज्ञियाय शर्म यंसत् । अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् । प्रेमां देव इति समानम् ।१। ॥२२॥

मरुतो देवाः सोमस्य मत्सन् । सुष्टुभः स्वर्काः । अर्कस्तुभो बृहद्वयसः । नभस्था वर्षनिर्णिजः । त्वेषासः पृश्निमातरः । शुभ्रा हिरण्यखादयः । तवसो भन्ददिष्टयः । शूरा अनाधृष्टरथाः । मरुतो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा इति समानम् ।१। ॥२३॥

अग्निर्जातवेदाः सोमस्य मत्सत् । स्वनीकश्चित्रभानुः । अप्रो-

यिवान् गृहपतिः। तिरस्तमांसि दर्शतः। घृताहवन ईड्यः। बहुल-वर्मास्तृतयज्वा। प्रतीत्या शत्रूञ्जेतापराजितः। अग्ने जातवेदो ऽभि द्युम्नमभि सह आयच्छस्व। स्तुतो ऽस्तुतः। समेद्धारमंहसः पाहि। अग्निर्जातवेदा इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्। १। अथोच्चवीर्यम्। २। तेजो ऽसि दृष्टिरसि विदृष्टि-रसि प्रदृष्टिरसि विधृतिरसि धरुणमसि धर्ममसि धर्त्रो ऽसावमुष्यै द्यावापृथिवीभ्याधोचथं देवेभ्यः। ३। ॥ २४ ॥

अस्य मदे जरितरिन्द्रः सोमस्य मत्सत्। अस्य मदे जरितरिन्द्रो ऽहिमहन्। अस्य मदे जरितरिन्द्रो वृत्रमहन्। अस्य मदे जरितरिन्द्र उद्यामस्तभ्नादप्रथयत्पृथिवीम्। अस्य मदे जरितरिन्द्रो व्यन्तरिक्ष-मतिरदा सूर्यं दिव्यैरयत्। अस्य मदे जरितरिन्द्र उदार्यं वर्णमति-रदव दासं वर्णमहन्। अस्य मदे जरितरिन्द्रो ऽपिन्वदपितो ऽजिन्व-दजुषः। अस्य मदे जरितरिन्द्र चर्या इव पम्फणतः पर्वतान्प्र-कुपितां अरम्णात्। अस्य मदे जरितरिन्द्रो ऽपां वेगमैरयत्। अस्य मदे जरितरिन्द्र इह अवदुप गिरि प्रात्। अस्य मदे जरितरिन्द्र इह श्रवदिह सोमस्य मत्सत्। प्रेमां देव इति समानम्। १। अथोच्चवीर्यम्। २। रोहोभ्यां रोहो मधस्य विष्टपं स्वर्गो तनू-र्नाक इति नाक इति। ३। ॥ २५ ॥

इति शाङ्खायनश्रौतसूत्रे ऽष्टमो ऽध्यायः समाप्तः।

पूर्वार्धः समाप्तः।

---

# ओम् ।

व्याख्यातो ऽग्निष्टोमः प्रकृतिर्द्वादशाहस्यैकाहानां च ।१। तस्य विकारं व्याख्यास्यामः ।२। श्रूयमाणं प्राकृतं नामधेयमन्यस्मिन्नर्थे प्रकृतिं निवर्तयति ।३। प्रतिषेधः ।४। अर्थः ।५। परिसंख्या ।६। उपजनो वा ।७। आग्निमारुतादूर्ध्वमागमास्तृचाणां प्रस्तारणामुक्थ्यो भवति ।८। एकागमादूर्ध्वमुक्थ्येभ्यः षोडशी ।९। चयोदशागमादूर्ध्वं षोडशिनो ऽतिरात्रः ।१०। अन्तरेणाग्निमारुतमनुयाजांश्चैतेषां स्थानम् ।११। ॥१॥

षाकमश्वं मैत्रावरुणस्य ।१। एह्यू षु ब्रवाणीति स्तोत्रियानुरूपौ ।२। पर्यूषु प्रधन्व वाजसातय इति तृचौ ।३। इन्द्रावरुणा युवमध्वराय नः ।४। आ वां राजानौ ।५। इन्द्रावरुणा मधुमत्तमस्येति यजति ।६। ॥२॥

सौभरं ब्राह्मणाच्छंसिनः ।१। वयमु त्वामपूर्व्य यो न इदमिदमिति स्तोत्रियानुरूपौ प्रगाथौ ।२। प्र मंहिष्ठाय यो अद्रिभिदिति तृचौ ।३। अस्तेव सु प्रतरमित्युत्तमामुद्धृत्योदप्रुत इति मन्त्रा[6] या पूर्वस्योद्धृता तया परिधाय बृहस्पते युवमिन्द्रश्चेति यजति ।[6]। ॥३॥

नार्मेधमच्छावाकस्य ।१। अधा हीन्द्रेति स्तोत्रियानुरूपौ ।२। क्रतुर्जनित्री ।३। विष्णोर्नु कम् ।४। प्र वः पान्तमन्धसः ।५।

सं वो कर्मणा ।६। इन्द्राविष्णू मदपती मदानामिति यजति ।७। ॥ ४ ॥

षोडशिने स्तोष्यमाणेषु[1]*

यस्माज्जातो न परो अन्यो अस्ति य आ बभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी ॥

इति यजमानः षोडशिग्रहमुपतिष्ठेत ।[2]१।

इन्द्र जुषस्व प्र वहा याहि शूर हरिव ।
पिबा सुतस्य मतिर्न मध्वश्चकानश्चारुर्मदाय ॥
इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।
अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः ॥
इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥

इति स्तोत्रियं शस्त्वा ।[3]२। तावतः पुरूवसो इत्येका ।[4]३। आ त्वा वहन्तु हरयः स्वादोरित्थेति गायत्रं तृचं पाङ्क्तं च विहरति ।[5]४। प्रथमेन गायत्रेण पादेन प्रथमं पाङ्क्तं पादं संधायावस्यति ।[6]५। द्वितीयेन गायत्रेण द्वितीयं संधाय प्रणौति ।[7]६। तृतीयेन गायत्रेण तृतीयं संधायावस्यति ।[8]७। द्वौ पङ्क्तेः परिशिष्टौ ताभ्यां प्रणौति ।[9]८। इन्द्राय साम गायतो मन्द्रैरिन्द्र हरिभिरित्यौष्णिहं तृचं बार्हतं च विहरति ।[10]९। प्रथमेनौष्णिहेन पादेन प्रथमं बार्हतं पादं संधायावस्यति ।[11]१०। द्वितीयेनौष्णिहेन द्वितीयं संधाय प्रणौति

* षोडशिग्रहमुपतिष्ठेतेति सूत्रच्छेदः Comm.

।११।[12] अष्टाक्षरमौष्णिहस्य पादस्याष्टाक्षरं बार्हतस्य ताभ्यामवस्यति ।१२।[13] चतुरक्षरे शिष्टे ते समस्योत्तमं बार्हतं पादं संधाय प्रणौति ।१३।[14] ॥ ५ ॥

आ धूर्षु न इति द्विपदां च विंशत्यक्षरां त्रिष्टुभं च विहरति ।१। प्रथमेन द्वैपदेन पञ्चाक्षरेण प्रथमं त्रैष्टुभं पादं संधायावस्यति ।२। द्वितीयेन पञ्चाक्षरेण द्वितीयं संधाय प्रणौति ।३। तृतीयेन पञ्चाक्षरेण तृतीयं संधायावस्यति ।४। चतुर्थेन पञ्चाक्षरेण चतुर्थं संधाय प्रणौति ।५।

एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ।
वि स्रुतयो यथा पथ इन्द्र त्वद्यन्ति रातयः ।
त्वामिच्छवसस्पते यन्ति गिरो न संयतः ।

प्र ते महे इति द्वैपदं त्र्यं जागतं च विहरति ।६। प्रथमेन द्वैपदेन चतुरक्षरेण प्रथमं जागतं पादं संधायावस्यति ।७। द्वितीयेन चतुरक्षरेण द्वितीयं संधाय प्रणौति ।८। तृतीयेन चतुरक्षरेण तृतीयं संधायावस्यति ।९। चतुर्थेन चतुरक्षरेण चतुर्थं संधाय प्रणौति ।१०। इन्द्रो दधीच इति तिस्रो गायत्र्यो द्वाभ्यामवसाय पादाभ्यां द्वाभ्यां प्रणौति द्वाभ्यामवसाय द्वाभ्याम् ।११। उत्तमेन गायत्रेण पादेन प्रोथश्व पुरोरथमित्येतस्याः पादं संधायावस्यति ।१२। द्वाभ्यां प्रणौति[13] द्वाभ्यामवसाय[14] द्वाभ्याम् ।१३।[15] प्र प्र वस्त्रिष्टुभमिति सूक्तम् ।१४।[16] आ यस्मिन्नित्येका ।१५।[17] यो व्यतीनित तिसृणामुत्तमां परिशिष्य निविदम् ।१६।[18] स्तोत्रिये चाद्यायो निविदे परिधानीयायै च ।१७।[19] उपद्रप्सस्येति

परिधायोक्थवीर्यं जपित्वा[20]पाः पूर्वामिति[21] यजति ।१८[22]। एतस्मिन्स्तोत्रिये चत्वारिंशत्संपदानुष्टुभः ।१९[23]। विक्रियमाणे यथासमाम्नातम् ।२०[24]।

इन्द्रश्च संराड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतम् ।

तयोरहं भक्षमनुभक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु ॥

इति ग्रहं भक्षयति ।२१[25]। ॥ ६ ॥

पान्तमा वो अन्धस इति स्तोत्रियानुरूपौ होतुः प्रथमेषु रात्रिपर्यायेषु ।१। न प्रथमस्य प्रथममाद्रियेत ।२। शेषः सूक्तस्योक्थमुखम् ।३। अभि त्वं मेषमिति जागतम् ।४। अध्वर्यवो भरतेन्द्रायेति यजति ।५। ॥ ७ ॥

प्र व इन्द्राय मादनं प्रकृतानीति मैत्रावरुणस्य ।१। सुरूपकृत्नुमित्युक्थमुखम् ।२। त्वं सु मेषमिति जागतस्य नवमीं चोत्तमां चोद्धृत्य चतुर्दशीं पूर्वां शस्त्वा त्रयोदश्या परिधाय पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रमिति यजति ।३। ॥ ८ ॥

वयमु त्वा तदिदर्था वयमु त्वा दिवा सुत इति ब्राह्मणाच्छंसिनः ।१। इन्द्र त्वा वृषभमित्युक्थमुखम् ।२। वाचंवत्याय प्रवस इति वैतसमासुद्धृत्य ।३। न्यू षु वाचमिति जागतम् ।४। इदं मद इन्द्र इति यजति ।५। ॥९॥

इन्द्राय मदने सुतमिन्द्रमिद्गाथिनो बृहदित्यच्छावाकस्य ।१। शेषः सूक्तस्योक्थमुखम् ।२। मा नो अस्मिन्निति जागतम् ।३। इदं त्यत्पात्रमिति यजति ।४। ॥१०॥

अयं त इन्द्र सोमो ऽयं ते मानुषे जन इति स्तोत्रियानुरूपौ

होतुर्मध्यमेषु रात्रिपर्यायेषु ।१। उद्वेदभीत्युक्थमुखमुत्तमामुद्धृत्य ।२। अहं भुवमिति आगतम् ।३। अपाय्यस्येति यजति ।४। ॥११॥

आ तू न इन्द्र क्षुमन्तमा तू न इन्द्र वृत्रहन्निति मैत्रावरुणस्य ।१। ऐन्द्र सानसिमित्युक्थमुखम् ।२। प्र वः सतामिति आगतम् ।३। अस्य मदे पुरु वर्पांसीति यजति ।४। ॥१२॥

अभि त्वा वृषभाभि प्र गोपतिमिति ब्राह्मणाच्छंसिनः ।१। आ तू न इन्द्र मद्र्यगित्युक्थमुखम् ।२। तदस्मै नव्यमिति आगतम् ।३। यस्ते रथ इति यजति ।४। ॥१३॥

इदं वसो सुतमिन्द्रेहि मत्सीत्यच्छावाकस्य ।१। शेषः सूक्तस्योक्थमुखम् ।२। अजातशत्रुमिति आगतस्योत्तमामुद्धृत्योपस्थद इति परिधायेदं ते पात्रं सनवित्तमिन्द्रेति यजति ।३। ॥१४॥

इदं ह्यन्वोजसा सुतं इन्द्रो य ओजसेति स्तोत्रियानुरूपौ होतृत्तमेषु रात्रिपर्यायेषु ।१। शेषः सूक्तस्योक्थमुखमुत्तमामित्व उद्धृत्य ।२। पिबसिन्न इति आगतम् ।३। तिष्ठा हरी इति यजति ।४। ॥१५॥

आ त्वेता नि षीदता सखाया गहीति मैत्रावरुणस्य ।१। यस्य संस्थ इति सूक्तोक्थमुखम् ।२। अहं दां गृणत इति आगतम् ।३। प्र घा न्वस्येति यजति ।४। ॥१६॥

योगेयोगे युञ्जन्ति ब्रध्नमिति ब्राह्मणाच्छंसिनः ।१। शेषः सूक्तस्योक्थमुखम् ।२। इमां ते धियमिति आगतस्योत्तमामुद्धृत्य सदस्येदं पश्यतेति परिधाय प्रो द्रोण इति यजति ।३। ॥१७॥

इन्द्रः सुतेषु सोमेष्विन्द्रं वर्धन्नित्यच्छावाकस्य ।१। उत्तमानि

चतुरुत्तराण्यभ्यस्यन्ति । २ । उप नः सुतमा गहि सोममिन्द्रेत्युक्थमुखम् । ३ । प्र ते मह इति जागतम् । ४ । मोर्यां पीतिमिति यजति । ५ । ॥ १८ ॥

अथाच्छावाकस्याहीनिक्याः । १ । पन्यंपन्यमित्सोतारः पन्य इदुप गायतेति स्तोत्रियानुरूपौ प्रथमे । २ । आ त्वा विशन्त्विन्दव आ त्वा विशन्त्वाशव इत्युत्तमे । ३ । संस्थाप्य रात्रिपर्यायान्[4] ॥ १९ ॥

आश्विनाय स्तोष्यमाणेषु सवताञ्जली जुहोति । [1] । समया वाचा शंसेत् । [2]१ । उत्तरोत्तरिण्या वा । [3]२ । यः प्रातरनुवाकस्तदाश्विनम् । [4]३ । तस्य विकारं व्याख्यास्यामः । [5]४ । यथाछन्दसं शस्त्वा । [6]५ । बार्हतीनां प्रतिपदां प्रथमंप्रथमं प्रगाथं पुनरादाय ककुप्कारम् । [7]६ । अग्निर्होता गृहपतिरिति प्रतिपदायै रेवतीमुद्धृत्य । [8]७ । चतुर्दश गायत्रादुद्धरति । [9]८ । आनुष्टुभाद्वे । [10]९ । त्रैष्टुभात्त्रयोदशं शतम् । [11]१० । नित्यानि काक्षीवतान्यागस्त्यानि च । [12]११ । प्रथमं तु काक्षीवतं शस्त्वा काराधद्वोनिया नव । [13]१२ । ऊर्ध्वमागस्त्येभ्यस्त्रिमतं सुपर्णम् । [14]१३ । अभ्यासो वाश्विनीनां तावत् । [15]१४ । समिद्धश्चिदिति तिस्र उद्धरति । [16]१५ । अयं वां मधुमत्तम इत्यष्टौ यथास्थानम् । [17]१६ । एकादशीष्विद्धात् । [18]१७ । तथाग्नेयाज्जागतात् । [19]१८ । उत्तमेन पाङ्क्तेन पादेनोदयं काङ्क्षेत् । [20]१९ । उदिते सौर्याणि । [21]२० । उदु त्यं जातवेदसमिति नव । [22]२१ । चित्रं देवानाम् । [23]२२ । नमो मित्रस्य । [24]२३ । इन्द्र क्रतुमिति प्रगाथः । [25]२४ । मही द्यौरिति तिस्रः । [26]२५ ।

विश्वस्य देवी मृचयस्य जन्मनो न या रोषाति न ग्रभ

इति द्विपदा ।२६[27]। बृहस्पते अति यदर्यो अर्हादिति परिदधाति ।२७[28]। प्रतिपदे चाहावः परिधानीयार्थे च ।२८[29]। तत्संपदा बृहतीसहस्रं संपद्यते ।२९[30]। इमे सोमासस्तिरोअह्न्यास इति पुरोनुवाक्या ।३०[31]। होता यक्षदश्विना सोमानां तिरोअह्न्यानामिति प्रैषः ।३१[32]। उभा पिबतं प्र वामंधांसीत्यर्धर्चौ संधायार्धर्चेन वषट्करोति ।३२[33]। विराजैवेति कौषीतकिः ।३३[34]। अश्विना वायुनेति वा ।३४[35]। ॥२०॥

त्रिवृद्बहिष्पवमानः ।१। अग्निष्टोम च ।२। पञ्चादितः पञ्चदशानि ।३। रात्रिश्च ।४। षट् सप्तदशानि ।५। षडेकविंशानि ।६। इति ज्योतिषः स्तोमाः ।७। एत एवाभिप्लवस्य ।८। ॥२१॥

अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिः ।१। अग्नये ब्रह्मण्वते ऽग्नये क्षत्रवते ऽग्नये क्षत्रभृते ।२। पौर्णमासीविकारः ।३। ब्रह्म प्रजावदा भर ब्रह्म च ते जातवेद इत्यग्नये ब्रह्मण्वते ।४। अर्चन्तस्त्वासाकमग्ने अध्वरमग्ने द्युम्नेन स्वदस्व हव्येत्युत्तरयोः ।५। बह्वीनां चेष्यमाणानां संनिवपनीया ।६। एकस्योखासंभरणीया ।७। ॥२२॥

प्राजापत्यस्य पशुबन्धः ।१। वायव्यो वा ।२। अग्नये वा कामाय ।३। पुरुषो ऽश्वो ऽविको गौरश्च इति पञ्च पशवः ।४। अजो वा तूपरः ।५। प्राजापत्ये चैके वायव्यं पशुपुरोळाशं कुर्वन्ति ।६। प्राजापत्यं वायव्ये ।७। वैश्वानरीयमाग्नेये ।८। हिरण्यगर्भ इति पुरोनुवाक्यास्त्विम उत्तरा याज्याः प्राजापत्यस्य ।९। उपांशु ।१०। एकया च शते नु कुविदङ्गेति पुरोनुवाक्याः पीवोअन्नान् याभिर्यासि प्र वायुमच्छेति वायव्यस्य ।११। आ ते वत्सो मनो

यमत्तुभ्यं त्वा अङ्गिरस्तमाग्निः परेषु धामस्विति पुरोनुवाक्या वयं ते अद्याररिम तमीळे च त्वेत्याग्नेयस्य ।१२। बहुवत्पशुनिगमाः पशुषु क्रियमाणेषु पृथिवीं शरीराणीत्यातः ।१३। एकवदत ऊर्ध्वम् ।१४। ॥२३॥

चितिविश्च दीक्षणीया ।१। आग्नावैष्णवो वैश्वानरीय आदित्येभ्यश्च ।२। त्यासु चचिमान्धारयन्तः ।३। पञ्चहविर्वा ।४। अदितये चतुर्थः पञ्चमः सरस्वत्यै ।५। पञ्चहविर्वातिथ्या ।६। आग्नेयैन्द्रौ वैश्वदेवबार्हस्पत्यौ वैष्णवश्च ।७। शुचिमर्कैस्तं अग्मासः ।८। चितिभ्यः प्रणीयमानाभ्य इत्युक्तः[9] पुरीष्यासः प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरित्युपांश्वनुब्रुवन्पश्चादनुसमेति ।९[10]। ॥२४॥

संचिते परिश्रुते[1] ऽन्युक्थमनुशंसेत्युक्तास्वित्यस्य पश्चादुपविश्याज्येनाप्लुत्यांशसनेनाहूय प्रणवेनानुशंसति ।१[2]। वैश्वानरायेत्युक्तः पुरोनुवाक्यामनूच्य याज्यया यजति[3] प्रयाजानुयाजान्वा परिहाप्य ।२[4]। ॥२५॥

अग्नीषोमीयस्य पशुपुरोलाशमनु देवसूभ्यो हवींषि ।१। अग्नये गृहपतये सोमाय वनस्पतये सवित्रे सत्यप्रसवाय रुद्राय पशुपतये बृहस्पतये वाचस्पतय इन्द्राय ज्येष्ठाय मित्राय सत्याय वरुणाय धर्मपतये ।२। अग्निर्होता गृहपतिर्हव्यवाळग्निरा विश्वदेवं प्रमिय इन्द्रं वयं महाधन उरुं नः ।३। सर्वपृष्ठाहवींषि ।४। ॥२६॥

अग्नये वामन्तिकाय गायत्राय त्रिवृते राथन्तरायेन्द्राय पैश्वाय

इति द्विपदा ।[27]२६। बृहस्पते अति यदर्यो अर्हादिति परिदधाति ।[28]२७। प्रतिपदे चाहावः परिधानीयार्थे च ।[29]२८। तत्संपदा बृहतीसहस्रं संपद्यते ।[30]२९। इमे सोमासस्तिरोअह्न्यास इति पुरोनुवाक्या ।[31]३०। होता यक्षदश्विना सोमानां तिरोअह्न्यानामिति प्रैषः ।[32]३१। उभा पिबतं प्र वामन्धांसीत्यर्धर्चौ संधायार्धर्चेन वषट्करोति ।[33]३२। विराजैवेति कौषीतकिः ।[34]३३। अश्विना वायुनेति वा ।[35]३४। ॥२०॥

त्रिवृद्बहिष्पवमानः ।१। सन्धिषाम च ।२। पञ्चादितः पञ्चदशानि ।३। रात्रिश्च ।४। पञ्च सप्तदशानि ।५। षडेकविंशानि ।६। इति ज्योतिषः स्तोमाः ।७। एत एवाभिप्लवस्य ।८। ॥२१॥

अग्निं तु चेष्यमाणस्यादीक्षितस्येष्टिः ।१। अग्नये ब्रह्मण्वते ऽग्नये क्षत्रवते ऽग्नये क्षत्रभृते ।२। पौर्णमासीविकारः ।३। ब्रह्म प्रजावदा भर ब्रह्म च ते जातवेद इत्यग्नये ब्रह्मण्वते ।४। अर्चन्तस्त्वामाकमग्ने अध्वरमग्ने द्युम्नेन स्वदस्व हव्येत्युत्तरयोः ।५। बह्वीनां चेष्यमाणानां संनिवपनीया ।६। एकस्योखासंभरणीया ।७। ॥२२॥

प्राजापत्यश्च पशुबन्धः ।१। वायव्यो वा ।२। आग्नेयो वा कामाय ।३। पुरुषो ऽश्वो ऽविको गौरश्च इति पञ्च पशवः ।४। अजो वा तूपरः ।५। प्राजापत्ये चैके वायव्यं पशुपुरोडाशं कुर्वन्ति ।६। प्राजापत्यं वायव्ये ।७। वैश्वानरीयमाग्नेये ।८। हिरण्यगर्भ इति पुरोनुवाक्याभिश्च उत्तरा याज्याः प्राजापत्यस्य ।९। उपांशु ।१०। एकया च राये नु कुविदङ्गेति पुरोनुवाक्याः पीवोअन्नान्प्र याभिर्यासि प्र वायुमच्छेति वायव्यस्य ।११। आ ते वत्सो मनो

यमत्तुभ्यं ता अङ्गिरस्तमाग्निः परेषु धामसिति पुरोनुवाक्या वयं ते अद्यारराम तमीळे च लेत्याग्नेयस्य ।११। बहुवत्पशुनिगमाः पञ्चसु क्रियमाणेषु पृथिवीं शरीराणीत्यातः ।१२। एकवदत ऊर्ध्वम् ।१३। ॥२३॥

चित्यग्निं दीक्षणीया ।१। आग्नावैष्णवो वैश्वानरीय आदित्येभ्यश्च ।२। त्वाम्नु चचियाख्यारयन्तः ।३। पञ्चहविर्वा ।४। अदितये चतुर्थः पञ्चमः सरस्वत्यै ।५। पञ्चहविर्वानित्या ।६। आग्नेयेन्द्रौ वैश्वदेवमार्हस्पत्यौ वैष्णवश्च ।७। शुचिमर्कैसं शम्मासः ।८। चितिभ्यः प्रणीयमानाभ्य इत्युक्त्[9] पुरीष्यासः प्रो त्ये अग्नयो ऽग्निषु विश्वेभिरग्ने अग्निभिरग्ने विश्वेभिरग्निभिरित्युपांश्वनुवन्पद्यादनुवनेति ।९[10]। ॥२४॥

संचिते परिहुते[1] ऽन्वध्यमनुशंसेत्युक्तयित्यस्य पश्चादुपविश्याध्येषसूष्णीं शंसेनानाहूय सजपेनानुशंसति ।१[2]। वैश्वानरायेत्युक्तः पुरोनुवाक्यामनूच्य याज्यया यजति[3] प्रयाजानुयाजान्वा परिहाप्य ।२[4]। ॥२५॥

अग्नीषोमीयस्य पशुपुरोळाशमन्वचि देवसूभ्यो हवींषि ।१। अग्नये गृहपतये सोमाय वनस्पतये सवित्रे सत्यप्रसवाय रुद्राय पशुपतये बृहस्पतये वाचस्पतय इन्द्राय ज्येष्ठाय मित्राय सत्याय वरुणाय धर्मपतये ।२। अग्निर्होता गृहपतिर्हव्यवाळग्निरा विश्वदेवं न प्रमिय इन्द्रं वयं महाधन उरुं नः ।३। सर्वपृष्ठाहवींषि च ।४। ॥२६॥

अग्नये वासन्तिकाय गायत्राय त्रिवृते राथन्तरायेन्द्राय पैष्ठाय

त्रैष्टुभाय पञ्चदशाय बार्हताय विश्वेभ्यो देवेभ्यो वार्षिकेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो मित्रावरुणाभ्यां शारदाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां बृहस्पतये हैमन्तिकाय पाङ्क्ताय त्रिणवाय शाक्वराय सवित्रे शैशिरायातिच्छन्दसाय त्रयस्त्रिंशाय रैवतायानुमतये ऽग्नये वैश्वानराय कायादितये विष्णुपत्न्यै ।१। अर्वन्त्स्वास्माकमग्ने अध्वरस्हतेन यो म मादया बृहस्पते जुषस्वैवा पिबे ऽमागदो वासमद्य

अन्वद्य नो अनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥

इति ।२। न पशुतन्त्रे हवींषि चोदमानानि निगमास्थानान्ते ।३। सदो संस्थाप्यानूबन्ध्यायास्त्वाष्ट्रेण पशुनोपांशु पत्नीशाले चरन्ति ।४। पर्यग्निकृतमुत्सृजन्ति न संस्थापयन्ति ।५। आज्येन वा पशुधर्मणा संस्थापयन्ति ।६। शिवस्त्वष्टः प्रथमभाजम् ।७। ॥२७॥

देविकाहवींषि चाप्यत्र पशुपुरोडाशम् ।१। अनुमत्यै कुह्वै राकासिनीवालीभ्यां धात्रे ।२।

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामं रायस्पोषं चिकितुषे ददातु ॥
धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् ।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः ॥

धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ।

धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवज्जुहोत ॥

इति ।३। देवीभ्यश्च हवींषि ।४। अद्भ्य ओषधीभ्यो गोभ्य उषसे रात्र्यै सूर्यायै दिवे पृथिव्यै वाचे गवे ।५। आपो हि ष्ठ यो वो हताभ्यः ।६। या ओषधीः पूर्वा अति विश्वाः ।७। यूयं गावो न ता सर्वा ।८। प्रति त्या सूनरी सत्या सत्येभिः ।९। रात्री व्यख्यत् ।

ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव ।

अशीतिः सन्त्यष्टा उतो ते सप्त सप्ततिः ॥ ।१०।

द्वे ते सुकिंशुकं ।११। एन्द्र याहि हरिभिः सखे विष्णो ।१२। स्योना पृथिवि बलित्था पर्वतानां ।१३। देवीं वाचं यद्वाग्वदन्ती ।१४। माता रुद्राणां वसोर्विदम ।१५। दिशां चावेष्टीः ।१६। अग्नये इन्द्राय मित्रावरुणाभ्यां बृहस्पतये विश्वेभ्यो देवेभ्यो विष्णवे ।१७। संस्थितायां चोदवसानीयायां मैत्रावरुण्या पयस्यया नानिष्ट्वाग्निचिन्मैथुनं चरेच्चरेत् ।१८। ॥ २८ ॥

इति शाङ्खायनसूत्रे नवमोऽध्यायः समाप्तः ।

# ओम् ।

ऋद्धुपचयाएम्यां द्वादशाहाय दीक्षन्ते । १ । द्वादश दीक्षाः । २ । द्वादशोपसदः । ३ । सुत्यान्यहानि द्वादश । ४ । अतिरात्रः सुत्यानां प्रथमं चोत्तमं च । ५ । मध्ये दशरात्रः । ६ । पृष्ठ्यः षडहः । ७ । त्रयश्छन्दोमाः । ८ । दशममहः । ९ । अयं यज्ञ इति याज्या हारियोजनस्य । १० । अननुवषट्कृत एवासंप्रेषितो मैत्रावरुणः परा याहि मघवन्नित्यनूच्य आयेदस्तमिति चेह मद एव मघवन्नित्यतिप्रैषमाह द्वितीयप्रभृतिषु । ११ । प्रायणीये वा यथासमाम्नातम् । १२ । श्वः सुत्या वामिंद्राग्नी तां वां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो महाम्नायं यज्ञेत्याग्नीध्रः स्वस्य धिष्ण्यस्य पश्चादुपविश्य । १३ । नित्यमेतत्प्रागुत्तमादह्नः । १४ । पत्नीसंयाजान्तता । १५ । आग्निमामनिर्वचनम् । १६ । नामधेयग्रहणं च । १७ । प्रायणीयोदयनीययोः सारस्वतः । १८ । माधुच्छन्दसे वा । १९ । द्विरात्रप्रभृतिष्वहःसंघातेषु यच होताश्विनं शंसेत्तत्र मैत्रावरुणः प्रातरनुवाकमनुब्रूयात् । २० । ॥ १ ॥

त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोमः प्रथमं दाशरात्रिकम् । १ । उप प्रयन्तो अध्वरमित्याज्यं श्रूष्टे प्र वो देवायेति मरुत्वत्ये । २ । माधुच्छन्दसः प्रउगः । ३ । आ याह्विन्द्रो ऽवस इति मरुत्वतीयम् । ४ । आ न इन्द्रो दूरादिति निष्केवल्यम् । ५ । अग्ने वर्चस्विन्वर्चस्वी त्वं देवेष्वसि वर्चस्वाहं मनुष्येषु भूयासमित्याग्निमारुतेत्याह्नं भक्षयति । ६ । युञ्जते मन

इहेह वो हयो न विद्वानित्युत्तमे वा परिहाप्येति वैश्वदेवे विकारः ।७। पद्मजनीया परिधानीया सर्वत्र वैश्वदेवस्य ।८। प्र शर्धायेत्याग्निमारुते ।९। प्रशात ऊर्ध्वमुक्थ्यानि ।१०। षोलश्यन्तं चतुर्थम् ।११। ॥२॥

पञ्चदशस्तोमं बृहत्पृष्ठं द्वितीयं ।१। अग्निं दूतं वृणीमह इत्याज्यं व्यूल्हे ।२। त्वं हि क्षैतवदिति समूल्हे सर्वत्रोत्तमां परिहाप्य ।३। गार्त्समदः प्रउगः ।४। वायो ये ते सहस्रिण इति द्वे तीव्राः सोमास आ गहीत्येका[5] शुक्रस्याद्येत्येकोभा देवा दिविस्पृशेति द्वे[6] अयं वां मित्रावरुणेति चत्वारि तृचान्युत[7] त्या नः सरस्वती घोरेति प्रउगतृचानि ।५[8]। विश्वानरस्य व इन्द्र इन्द्रसोमपा इति मरुत्वतीयस्य प्रतिपदनुचरौ ।६[9]। उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यः प्रगाथः ।७[10]। इन्द्र सोमं सोमपत इति मरुत्वतीयम् ।८[11]। या त ऊतिरिति निष्केवल्यम् ।९[12]। इन्द्रौजस्विन्नोजस्वी त्वं देवेष्वस्योजस्व्यहं मनुष्येषु भूयासमित्यतिपाद्यं भक्षयति ।१०[13]। विश्वो देवस्येति वैश्वदेवस्य प्रतिपत् ।११[14]। अस्य हि स्वयशस्तरमित्युत्तरे ।१२[15]। आ विश्वदेवमित्यनुचरः ।१३[16]। तद्देवस्य ते हि द्यावापृथिवी यज्ञस्य व इति वैश्वदेवे विकारः ।१४[17]। वृषा वृष्णे वृषा[?] शर्धाय नू चित्सहोजा इत्याग्निमारुते ।१५[18]। ॥३॥

सप्तदशस्तोमं वैरूपपृष्ठं तृतीयम् ।१। युक्ष्वा हि देवहूतमानित्याज्यं व्यूल्हे ।२। त्वमग्ने वसूनिति समूल्हे सर्वत्रोत्तमां परिहाप्य ।३। त्रैष्टुभ आत्रेयः प्रउगः ।४। वायवा याहि वीतय इत्येका[5] वायो याहि शिवेति द्वे इन्द्रश्च वायवेषां सुतानामिति द्वे[6] अयं सोम ऋतूयुत इत्येका मित्रे वरुणे[8] अश्विनावेह गच्छतमा[9] याह्यद्रिभिः[10]

सजूर्विश्वेभिर्देवेभि[11]रुत नः प्रियेति प्रउगतृचानि । ५[12]। तं तमिद्राध इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ । ६[13]। प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः प्रगाथः । ७[14]। अयमेति मरुत्वतीयम् । ८[15]। यद्याव इन्द्र यदिन्द्र यावत इति वैरूपस्य स्तोत्रियानुरूपौ प्रगाथौ । ९[16]। इन्द्र त्रिधातिति साम्नप्रगाथः । १०[17]। अहं भुवं यो जात इति निष्केवल्यम् । ११[18]। सूर्य भ्राजस्विन्भ्राजस्वी त्वं देवेष्वसि भ्राजस्व्यहं मनुष्येषु भूयासमित्यतिग्राह्यं भक्षयति । १२[19]। अभि त्वा देवेत्यनुचरः । १३[20]। उदु ष्य देवः सविता हिरण्यया घृतवती भुवनानामिति इमावनस्यो जातः परावत इति वैश्वदेवे विकारः । १४[21]। वैश्वानराय धिषणां धारावरास्त्वमग्ने प्रथमो अङ्गिरा ऋषिरित्याग्निमारुते १५[22]। ॥ ४ ॥

एकविंशस्तोमं वैराजपृष्ठं चतुर्थम् । १। आग्निं न स्ववृक्तिभिरित्याज्यं सूक्तं[2] अग्निं नर इति समूल्हो । २[3]। आनुष्टुभः प्रउगः । ३[4]। वायो शुक्रो अयामि त इत्येका[5] वि हि होत्रा इति द्वे[6] इन्द्रश्च वायवेषां सोमानां[7] यस्त्रिकेतो[8] नो विश्वाभिरूतिभिरा[9] त्वा गिरो[10] उपत्यमित्येका[11] यूयं हि ष्ठेति द्वे[12] इयमददादिति प्रउगतृचानि । ४[13]। प्र णो देवीति समूल्हो । ५[14]। तं त्वा यज्ञेभिरिति प्रतिपन्मरुत्वतीयस्य । ६[15]। ये त्र्यृचस्य प्रथमस्य न उत्तरस्यानुचराः सब्राह्मणस्पत्याः । ७[16]। सुधी[17]रवमिन्द्रेन्द्र मरुत्व इमं नु मायिनमिति त्र्यार्षीति[18] मरुत्वतीयम् । ८[19]। पिबा सोममिन्द्र मन्दतु त्वेति वैराजस्य स्तोत्रियानुरूपौ न्यूङ्खम् । ९[20]। मध्यमस्य पादस्य द्वितीयसप्तमयोरक्षरयोर्द्विरपूर्वं द्विरुत्तरमित्यानुष्टुभः । १०[21]। यं तो३ ओ३ सुषाव हर्यो३ ओ३ श्वाद्रि-

रिति ।[22] ११ । द्वितीये ऽन्तरे द्वादशकस्य एकैकं दीर्घं ह्रस्वांस्त्रींस्त्री-
नन्तरेणेति वैराजः ।[23] १२ । यं तो सुपावेति ।[24] १३ । द्वितीयचतुर्थयो-
रुत्तरयोः प्रतिगरस्यानुष्टुभः प्रतिन्यूङ्खः ।[25] १४ । द्वितीये वैराजः ।[26] १५ ।
ओथोऽ३ ओऽ३ मोदोऽ३ ओऽ३ एवेति ।[27] १६ । ओथो मोदैवेति ।[28] १७ ।
इन्द्रमिद्देवतातय इति साम्प्रगाथः ।[29] १८ । तुभ्येदिमेति निष्कर्ण
पूर्वयोर्न्यूङ्खः ।[30] १९ । कुह श्रुतो युधस्य ते त्वमु वः सत्रासाहमिति
तिस्र इति निष्केवल्यम् ।[31] २० । द्वितीयादह्नः प्रतिपत् ।[32] २१ । हिरण्य-
पाणिमित्यनुचरः ।[33] २२ । आ देवो यातु सविता सुरत्नः प्र द्यावा
यज्ञैः पृथिवी नमोभिः प्र ऋभुभ्यः प्र शुक्रैतु देवीति वैश्वदेवे
विकारः ।[34] २३ । प्र सम्राजः क ईं व्यक्ता ऊवे वः सुद्योत्मानमित्याग्नि-
मारुते ।[35] २४ । ॥ ५ ॥

विश्वजित्सोमं शाकरपृष्ठं पञ्चमम् । १ । इममू ष्विति नवर्चमाज्यं
न्यूङ्ख्यं[2] ऽग्निं तं मन्य इति समूल्हे ।[3] २ । तस्य प्रथमार्धे पदमवगृह्य
पदमवगृह्य द्वे अवरार्ध्येकेन प्रणौति ।[4] ३ । पङ्क्तिशंसं परः ।[5] ४ । बार्हतः
प्रउगः ।[6] ५ । आ नो यज्ञं दिविस्पृशमिति द्वे आ नो वायवित्येकाऽ[7]
वां सहस्रमिति तिस्र[8] ऋधगित्थेति द्वे प्र मित्रायेत्येकेना[9] उ वां
दिविष्टय[10] आ नो विश्वा सुहव्यो[11] देवं देवं वो ऽवसे देवं देवमभि-[12]
ष्टमदद्दादिति प्रउगतृचानि ।[13] ६ । उत स्या नः सरस्वती घोरेति
समूल्हे ।[14] ७ । यत्पाञ्चजन्ययेति मरुत्वतीयस्य प्रतिपत् ।[15] ८ । इत्था हि
सोम इद्वितासि मरुत्वाँ इन्द्र वृषभो ऽयं ह येनेति तिस्र इति मरु-
त्वतीयम् ।[16] ९ । महानाम्न्यः स्तोत्रियः ।[17] १० । यथा तिस्रो ऽनुष्टुभस्त-
थैकैका ।[18] ११ । उत्तमायाः पङ्क्तिरुत्तमा ।[19] १२ । उत्तमार्धे च पञ्च

पदानि पङ्क्तिः पुरीषमित्याचक्षते तन्निविच्छंसम्।[20]१३। प्रत्यस्मै पिपीषते यो रयिवो रयिंतमस्त्वमु वो अप्रहणमिति त्र्यृचस्तृचा अस्मा अस्मा इति दशम्येवा ह्यसि वीरयुरिति वा यो ऽनुरूपः।[21]१४। यदिन्द्र नाहुषीष्वेति सामप्रगाथः।[22]१५। इन्द्रो मदाय प्रेदं ब्रह्मा भुरेकस्त्वमिन्द्रं वाजयामसीति तिस्र इति निष्केवल्यम्।[23]१६। तत्सवितुर्वरेण्यमित्यनुचरः।[24]१७। उदु ष्य देवः सविता दमूना इति तिस्रो मही द्यावापृथिवी इति चतस्र ऋभुर्विभ्वा यो नु वां मित्रावरुणौ प्र शंतमेति वा वैश्वदेवे विकारः।[25]१८। हविष्पान्तं वपुर्भ्यग्निर्होता गृहपतिरिति तिस्र इत्याग्निमारुते।[26]१९। मूर्धानमा रुद्राय इममू ष्विति नवेति समूल्हे।[27]२०।॥६॥

चयस्त्रिंशस्तोमं रैवतपृष्ठं षष्ठम्।१। नित्याभिर्याज्याभिः पारुच्छेपीः संधाय यजन्ति।२। आ त्वा जुव आ वां धिय इत्यैन्द्रवायवस्य पुरोनुवाक्ये।३। स्तीर्णं बर्हिरा वां रथ इति याज्ये।४। सुषुमेति मैत्रावरुणस्य पुरोनुवाक्योत्तरा याज्या।५। युवां स्तोमेभिरित्याश्विनस्य पुरोनुवाक्योत्तरा याज्या।६। इदमिन्द्र तां वां धेनुं विश्वेषु हि त्वा मो षु वो अस्मदा यज्ञः पत्नीस्ता नेराषन्निति नेष्टुर्द्विपदा त्रिष्टुप्चाग्निं होतारं दध्यङ् होति प्रातःसवने प्रस्थितानां यजन्ति।७। तुभ्यं हिन्वान इति ऋतुयाजेष्वेकैकोर्ध्वमृतुप्रैषेभ्यः।८। स्वयं यजतो ऽध्वर्युर्गृहपतिश्च।९। चित्यस्य पश्चादुपविश्याध्वर्युः शालामुखीयस्य गृहपतिः।१०। पिबा सोममिन्द्र सुवानमिन्द्राय हि द्यौरस्तया वयं मघवन्पाहि न इन्द्र नू इत्था ते ऽवमंह इन्द्र वनोति हि सुन्वन्ति माध्यन्दिने[11] विकारः।११। उत माता

इन्द्रहविरिति नेष्टुस्तृतीयसवने ।१२। अनवानन्तो यजन्ति ।१३। ऐकाहिकीभिर्वा ।१४। ॥७॥

अयं जायतेत्याज्यम् ।१। आतिच्छन्दसः प्रउगः ।२। सोर्षं यद्दिरा[3] वां रथो[4] ऽयं मिचाय[5] युवां सोमेभिर्ह्यग्निन्द्रेत्येका[7] ऽवमेह इन्द्रेति द्वे[8] ओ षू णो अग्न[9] इयमददादिति प्रउगरूपाणि ।[10]३। उत नः प्रियेति समूल्ह्ये ।[11]४। स पूर्व्य इति प्रतिपन्मरुत्वतीयस्य ।[12]५। यं त्वं रथं स यो वृषा मरुत्वाँ इन्द्र मीढ्व इति तिस्र इति मरुत्वतीयम् ।[13]६। रेवतीर्नो रेवाँ इद्रेवत इति रैवतस्य स्तोत्रियानुरूपौ ।[14]७। मा चिदन्यदिति मामप्रगाथः ।[15]८। एन्द्र याह्युप न घा त्वस्तोप मैरु हरिभिरिति तिस्र इति निष्केवल्यम् ।[16]९। अभि त्यं देवमिति प्रतिपद्वैश्वदेवस्य ।[17]१०। तस्याः षोडशाक्षरेण विंशत्यक्षराद्दशाक्षरेण प्रप्लुत्य पञ्चदशाक्षरेणावसाय पञ्चदशाक्षरेण ।[18]११। अस्य हि स्वयशस्तरमित्युत्तरे ।[19]१२। कनीयादक्षो ऽनुचरः ।[20]१३। उदु ष्य देवः सविता सवाय[21] कतरा पूर्वा[22] किमु श्रेष्ठ[23] इदमित्येतेषूक्तेषु परिशिष्य ये यज्ञेनेति सूक्ता परिशिष्टे शंसतीति वैश्वदेवे विकारः ।[24]१४। अहस्य कृष्णं[25] प्रयज्यव[26] इमं स्तोममित्याग्निमारुते ।[27]१५। मध्यमाच्यवहाग्निष्केवल्यमरुत्वतीययोरप्समानांसूचान्समूल्ह उत्सृजति ।[28]१६। स्वस्ति नो मिमीतामिति च तिस्रो ऽन्ते वैश्वदेवानां करोति ।[29]१७। ततं म इत्यार्भवं चतुर्थस्य ।[30]१८। प्र यन्तु वाजा इति च तिस्रो ऽन्ते मारुतस्य ।[31]१९। वसुं न चित्रमहसमिति जातवेदसीयम् ।[32]२०। परोक्षपृष्ठस्य इन्द्रयन्तरपृष्ठस्योपाक्षपृष्ठस्यापर्यपृष्ठस्य मनूपृष्ठस्य च्छन्दोदृष्टसोमस्य च च्छन्दोगवशेन स्तोत्रिया-

नुरूपान्सामप्रगाथांय । २१[33] । समानमन्यत्समूल्हेन । २२[34] । तथा विश्व-जिति । २३[35] । ॥ ८ ॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसाम सप्तमम् । १ । प्र वः शुक्राये-त्याज्यम् । २ । त्रैष्टुभः प्रउगः । ३ । प्र वीरया[4] ते मन्येन्द्रो[5] चतुरो[6] गोमती[7] नो देव[8] प्र वो यज्ञेषु[9] प्र वोढेति प्रउगतृचानि । ४[10] । ते त्र्यहस्य प्रथमस्य प्रतिपदनुचराः सब्राह्मणस्त्यास्ते छन्दोमेषु स्वर-सामस्वभिप्लवे च । ५[11] । प्रथमादेव प्रथमस्याच्छान्दोमिकस्य । ६[12] । द्वितीयाद्द्वितीयस्य । ७[13] । तृतीयात्तृतीयस्य । ८[14] । एवं त्र्यहस्य पूर्व-स्याभिप्लविकस्य । ९[15] । एवमुत्तरस्य । १०[16] । एवं स्वरसाम्नाम् । ११[17] । कया शुभा त्वं सुमेषमिति मरुत्वतीयम् । १२[18] । तमु ष्टुह्यभि त्वं मेषमिति निष्केवल्यम् । १३[19] । न कस्तरयन्तरस्य योनिमनुशंसेत् । १४[20] । ये प्रथमयोरह्नोः प्रतिपदनुचरा वैश्वदेवस्य ते छन्दोमेष्वभिप्लवे च । १५[21] । तत्सवितुर्वरेण्यं प्रेता यज्ञस्याद्य देवायेति तवानुजुनीतीति पञ्चा यादि वनता बहीमासस्वर्णधोद्धत इति तिस्र इति वैश्वदेवे विकारः । १६[22] । वैश्वानरो न ऊतये ।

वैश्वानरो न आ गमदिमं यज्ञं सजूरुप ।
अग्निरुक्थेन वाहसा ॥
वैश्वानरो अङ्गिरसां स्तोमं यज्ञं [redacted] जोजनत् ।
ऐषु द्युम्नं स्वर्यमत् ॥

प्र यदस्त्रिष्टुभमिति पञ्चदश नव वार्चन्तस्त्वेत्याग्निमारुते । १७[23] । ॥ ९ ॥

चतुश्चत्वारिंशस्तोमं रथन्तरपृष्ठमष्टमम् । १ । अग्निं वो देवमि-त्याज्यम् । २ । त्रैष्टुभः प्रउगः । ३ । कुविदङ्गेति प्रथमात्तृतीये[4] आ

वायो भूषेति चैका[5] यावत्तर:[6] प्रति वां सूर उदिते[7] ऽप स्वसुरुषं वोम:[9] प्र ब्रह्माण[10] उत स्या न: सरस्वती जुषाणेति प्रउगशस्त्राणि ।[11] ४ । महाँ इन्द्रो नृवदिमा उ त्वा पुरुतमस्य का स्य वीर इति सर्वत्र चतस्र उत्तमा: परिहाप्य महश्चित्त्वमस्य द्यावापृथिवी इति मरुत्वतीयम् ।[12] ५ । त्वं महाँ इन्द्र तुभ्यं इमं महाँ इन्द्र यो द्यापूर्यां तां सु ते कीर्तिमिमां ते धियमिति निष्केवल्यम् ।[13] ६ । हिरण्यपाणिमूतय इति चतस्रो[14] मही द्यौर्युवाना पितरेति हवो[15] देवानामिदिमा[16] नु कं[17] विश्वे देवा ऋतावृध इति तिस्र इति वैश्वदेवे विकार: ।[18] ७ ।

वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् ।
क्ष्मया वृधान ओजसा ॥
त्वया पावक दीदिह्यग्ने वैश्वानर द्युमत् ।
जमदग्निभिराहुत: ॥

ऋतावानं वैश्वानरं[19] कद्द नूनं कधप्रियो[20] दूतं वो विश्ववेदसमित्याग्निमारुते ।[21] ८ । ॥१०॥

अष्टाचत्वारिंशस्तोमं बृहत्पृष्ठं नवमम् ।१। आगन्म महा वोमस्या तवसमित्याज्यम् ।२। पूर्वं वा ।३। त्रैष्टुभ: प्रउग: ।४। आ वायो भूषेति प्रथमातृतीये चोत्तमा च[5] द्वितीयाचतुर्थ्यौ चार्वन्तो न श्रवस इति च[6] दिवि क्षयन्ता[7] विश्ववारेन्द्रं नर[8] ऊर्ध्वो अग्नि:[10] प्र चोदयेति प्रउगशस्त्राणि ।[11] ५ । अयमेन्द्रो रथाय निष्ठा हरी गायत्साम प्र मन्दिन इति मरुत्वतीयम् ।[12] ६ । आ सत्यो यात्वस्मा, इदु श्रोत्रं य इन्द्र तत्त इन्द्रियमवं सुवं विश्वजित इति

निष्केवल्यम् ।[13]७। अभि त्वा देव प्र वां महि द्यवी इति तृचा-
[14]विन्द्र इव इत्येका ते नो रत्नानीति द्वे[15] अग्निरुक्थ इतिप्रभृति
पञ्च मनोः सूक्तानि[16] ये त्रिंशतीत्युपोत्तमामुद्धृत्य[17] न हि वो
अस्त्यर्भक इत्येका[18] ऽयमेति चतस्रो[19] बभ्रुरेक इति वा मनुप्र-
वत्सौ[20] विश्वे देवास आ गतेति तृचं भारद्वाजमिति वैश्वदेवे
विकारः ।[21]८।

दिवि पृष्टो अरोचताग्निर्वैश्वानरो बृहन् ।
ज्योतिषा बाधते तमः ॥
स विश्वं प्रति चाक्लृपदृतूनुत्सृजते वशी ।
यज्ञस्य वय उत्तिरन् ॥

अग्निः परेषु धामसु[22] मरुतो [23]यस्याग्निर्होता पुरोहित[24] इत्याग्निमारुते ।[25]९। यानि त्र्यहस्य प्रथमस्य प्रातःसवनतृतीय-सवनानि तानि समूळ्हे छन्दोमानाम् ।[26]१०। निष्केवल्यमरुत्व-तीययोश्च जागतान्युत्सृजति ।[27]११। स यो वृषेति पञ्चदशोर्ध्वं कया-शुभीयात् ।[28]१२। यो जात इति तमुद्धरीयात् ।[29]१३। बृहद्रथ-न्तरपृष्ठे द्विसूक्ताः सर्वे ।[33]१४। ॥११॥

अविवाक्यं चतुर्विंशस्तोमं द्वयमहः ।१। त्रयस्त्रिंशमग्निष्टोमसाम ।२। त्रिकं मानसम् ।३। वामदेव्यस्य योनौ रथन्तरं पृष्ठम् ।४। अप्रतिभायामन्यः स्वाध्यायम् ।५। उद्धृत्यानुष्टुभमितरेषां छन्दसां संपदानुष्टुभौ पञ्चदशं सहस्रमेकस्मिन्सवनीये ।६। द्वात्रिंशतं गायत्र्यः ।७। अग्निं नरः प्रति क्षा सुनयां शुभेति तृचानुष्टुभां स्थाने ।८। चतुर्विंशतिं त्रिष्टुभः ।९। तथा जगत्यः ।१०। पञ्चदश

प्रगाथान् ।११। श्रौष्णिहांश्च तृचान्पञ्चदश ।१२। पाङ्क्तानि च ।१३। अनुष्टुभां प्रातरनुवाकः पञ्चदशे शते ।१४। तृतीयाचतुर्थ्यौ स्तोत्यानामुद्धृत्याभि प्रवन्तेति द्वे ।१५। अच्छा नः शीरशोचिषमिति तिस्रो उच्छा वो अग्निमवस इत्येतासां स्थाने ।१६। प्रति श्रुतायेति तिस्रः प्रत्यस्मै पिपीषत इत्येतासां स्थाने ।१७।॥१३॥

अग्ने नमस्येत्याज्यम् ।१। तस्य प्रथमायां पञ्चाक्षरेण विगृह्य द्वाभ्यां पञ्चाक्षराभ्यामवसाय द्वाभ्यां प्रणौति ।२। माधुच्छन्दसः प्रउगः ।३। द्वाविंशतिं गायत्र्यः ।४। स्वजामेरु बारे पवमानो अव्यय इति यावत्सुतौ याथाकाम्यम् ।५। उष्णिहमोजसेत्येकोष्णिहतावपश्यतीत्येतस्याः स्थाने ।६। त्रिकद्रुकीया प्रतिपन्मरुत्वतीयस्य ।७। तस्याः षोडशाक्षरेण विगृह्य षोडशाक्षरेण प्रणुत्य षोडशाक्षरेणावसाय षोडशाक्षरेण ।८। तुविशुष्मेत्युत्तरे ।९। इन्द्रविन्द्रायेति सूक्तात्पूर्वौ प्रगाथौ पिन्वन्त्यपीयया संशंसतीति मरुत्वतीयम् ।१०। वामदेव्यस्य स्तोत्रियानुरूपौ यस्तोत्र्यं भाव्याथा राथन्तरं प्रगाथं स्तोत्रियानुरूपौ च ।११। सखाय आ शिषामहीति नव ।१२। आ धूर्ष्वस्मै वज्रमेक इति च द्विपदे ।१३। हैरण्यस्तूपीयं च ।१४। माध्यैरण्यस्तूपीयात्प्रगाथेन संशंसति ।१५। इति निष्केवल्यम् ।१६। पङ्क्तावनिपदनुचरौ वैश्वदेवस्य ।१७। पुरस्तात्वानोभद्रीयात्प्रउगीयमिति वैश्वदेवे विकारः ।१८। उरु विष्णविक्रमस्व भवा मित्र इति यजति ।१९। अग्निं नर इत्यग्निष्टोमसामः स्तोत्रियानुरूपौ ।२०। आयं गौर्मही द्यौरिति स्तोत्रियानुरूपौ ।२१। तं प्रत्नथेति जयोदम ।२२। यज्ञो यज्ञेति

परिधाय ।२२। प्रजापत इति यजति ।२३। उक्थैराद्यावो व्याख्यातः ।२४। इति समूल्हे ऽतिरिक्तोक्थम् ।२५। पुरा पत्नीसंयाजेभ्यः संस्थाप्य वा गार्हपत्ये हुत्वा पूर्वया द्वारा सदः प्रपद्य सर्पराज्ञीः पराङुपांश्वप्रस्तुवन् ।२६। अध्वर्यो३ इत्यामन्त्रितो होतरिति सर्वत्र प्रतिगृणीमि ।२७। ओं होतस्तथा होतरित्याचक्षाणे ऽनुगृणाति ।२८। ॥१३॥

अध्वर्यो३ इति दशहोतरि वदिष्यन् ।१। प्रजापतिरकामयत बहुः स्यां प्रजायेय सर्वं वेदमनुप्याद्यदिदं किंचेति [2] स एतं दशहोतारं यज्ञक्रतुमपश्यदग्निहोत्रम् ।[3]३। इत्युक्त्वायोपांशु ।[4]४। चित्तिः स्रुक् [5] चित्तमाज्यम् [6] वाग्वेदिः [7] आधीतं बर्हिः [8] केतो अग्निः [9] विज्ञातमग्नीत् [10] वाचस्पतिर्होता [11] मन उपवक्ता [12] प्राणो हविः [13] सामाध्वर्युः [14] इति होतारः ।[15]४। अथ यजुः ।[16]५। वाचस्पते हृदिधेमानन् [17] वाचस्पतिः सोममपाद् अस्मासु नृम्णं[18] धाः ।[19]६। इत्युपांशु ।[20]७। तेन देवान्मनुष्यानसुरानित्येतांस्त्रयानजनयत्प्रजापतिः [21] स येषां वा एवंविद्वान्होता भवति [22] प्र वै स होता प्रजया पशुभिर्जायते [23] प्र ते यजमानाः प्रजया पशुभिर्जायन्ते येषामेवंविद्वान्होता भवती[24]ति ।[25]८। ॥१४॥

अध्वर्यो३ इति चतुर्होतरि वदिष्यन् ।१। ते दया एवान्वाहृत्ता आसन्देवाश्च मनुष्याश्च [2] पराञ्चो ह्यस्मादसुरा आसन्सो ऽकामयत वीरो म आजायेत येनेमानसुरानभिभवेयमिति [3] स एतं चतुर्होतारं यज्ञक्रतुमपश्यद्दर्शपूर्णमासौ ।[4]२। इत्युक्त्वायोपांशु ।[5]३।

पृथिवी होता । [6] द्यौरध्वर्युः । [7] त्वष्टाग्नीत् । [8] मित्र उपवक्ता । [9] इति होतारः । [10] ४ । अथ ग्रहः । [11] ५ । वाचस्पते वाचो वीर्येण संभृततमेनायक्ष्यसे । [12] यज्ञपतये वसु वार्यमासंस्करसे । [13] वाचस्पतिः सोमं पिबतु । [14] जजनदिन्द्रमिन्द्रियाय स्वाहा । [15] ६ । इत्युपांशु । [16] ७ । तेनेन्द्रं वीरमजनयन्त तेनासुरानभ्यभवत्प्रजापतिः । [17] स येषां वा एवंविद्वान्होता भवति । [18] आ वै तस्य होतुर्वीरो जायते । [19] आ तेषां यजमानानां वीरा जायन्ते । [20] अभि वै स होता द्विषन्तं भ्रातृव्यं भवति । [21] अभि ते यजमाना द्विषतो भ्रातृव्यान् भवन्ति येषामेवंविद्वान्होता भवती[22]ति । [23] ८ । ॥ १५ ॥

अध्वर्यो ३ इति पञ्चहोतरि वदिष्यन् । १ । तस्मा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्याय नातिष्ठन्त । [2] स एतं पञ्चहोतारं यज्ञक्रतुमपश्यत्ताहुर्मोक्षामि । [3] २ । इत्युक्त्वाथोपांशु । [4] ३ । अग्निर्होता । [5] अश्विनावध्वर्यू । [6] रुद्रो ऽग्नीत् । [7] बृहस्पतिरुपवक्ता । [8] इति होतारः । [9] ४ । अथ ग्रहः । [10] ५ । वाचस्पते ऽच्छिद्रया वाचाच्छिद्रया जुह्वा । [11] दिवि देवावृधन्होत्रामैरयस्व । [12] ६ । इत्युपांशु । [13] ७ । ततो वा इन्द्राय देवता ज्यैष्ठ्याय श्रैष्ठ्यायातिष्ठन्त । [14] स येषां वा एवंविद्वान्होता भवति । तिष्ठते वै तस्मै होत्रे स्वाः श्रैष्ठ्याय [15] तिष्ठन्ते तेभ्यो यजमानेभ्यः स्वाः श्रैष्ठ्याय येषामेवंविद्वान्होता भवती[16]ति । [17] ८ । ॥ १६ ॥

अध्वर्यो ३ इति षड्ढोतरि वदिष्यन् । १ । देवा ऽकामयन्तान्नादः स्यामन्नपतिरिति । [2] स एतं षड्ढोतारं यज्ञक्रतुमपश्यत्पशुबन्धम् । [3] २ । इत्युक्त्वाथोपांशु । [4] ३ । सूर्यस्ते चक्षुः । [5] वायुः प्राणः । अन्तरिक्षमात्मा । [6] यज्ञो गात्राणि । [7] द्यौः पृष्ठम् । [8] पृथिवी शरी-

रम् [9]। इति होतारः [10]।४। अथ यष्टः [11]।५। सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु [12]। आतास्त इन्द्र सोमा वातापे हवनश्रुतः। [13]।६। इत्युपांशु [14]।७। ततो वै सो ऽन्नादो ऽन्नपतिरासीत् [15]। स येषां वा एवंविद्वान्होता भवति [16]। अन्नादो वै स होताऽन्नपतिर्भवति [17]। अन्नादास्ते यजमाना अन्नपतयो भवन्ति येषामेवंविद्वान्होता भवती[18]ति [19]।८। ॥१७॥

अध्वर्यो३ इति सप्तहोतारं वदिष्यन्।१। ते देवा अकामयन्त कॢप्ताः कॢप्तेषु लोकेषु स्यामेति [2]। त एतं सप्तहोतारं यज्ञक्रतुमपश्यन्सौम्यमध्वरम्।[3]२। इत्युक्त्वाथोपांशु।[4]३। महाहविर्होता [5]। सत्यहविरध्वर्युः [6]। अचित्तपाजा अग्नीत् [7]। अचित्तमना उपवक्ता [8]। अनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ [9]। अयास्य उद्गाता [10]। इति होतारः।[11]४। अथ यष्टः।[12]५। वाचस्पते विधे नामन्विधेम ते नाम [13]। विधेस्त्वमस्माकं नाम [14]। मा देवानां तन्तुश्छेदि मा मनुष्याणाम् [15]। यजुर्दिवा पृथिव्योपहूतः सोमस्य पिब स्वाहा।[16]६। इत्युपांशु।[17]७। ततो वै तेभ्यो ऽकल्पत [18]। ते देवाः कॢप्ताः कॢप्तेषु लोकेष्वासन् [19]। अप्यद्य कॢप्ताः कॢप्तेषु [20]। स येषां वा एवंविद्वान्होता भवति [21]। कल्पते वै तस्मै होत्रे योगक्षेमः [21]। कल्पते तेभ्यो यजमानेभ्यो योगक्षेमः [22]। अभि वै स होता स्वर्गं लोकमश्नुते प्रत्यस्मिंल्लोके प्रतितिष्ठति [23]। अभि ते यजमानाः स्वर्गं लोकमश्नुवते प्रत्यस्मिंल्लोके प्रतितिष्ठन्ति येषामेवंविद्वान्होता भवती[24]ति।[25]८। ॥१८॥

तनूरतो वदति।१। अध्वर्यो येषां वा अन्नादीं प्रजापतेस्तन्वं विद्वान्होता भवत्यन्नादो वै स होता भवत्यन्नादास्ते यज-

माना भवन्ति ।2 अध्वर्यो येषां वा अन्नपत्नीं प्रजापतेस्तन्वं विद्वा-
न्होता भवत्यन्नपतिर्वै स होता भवत्यन्नपतयस्ते यजमाना भवन्ति ।3
अध्वर्यो येषां वै भद्रां प्रजापतेस्तन्वं विद्वान्होता भवति भद्रं
वै तस्मै होत्रे भवति भद्रं तेभ्यो यजमानेभ्यो भवति ।4 अध्वर्यो
येषां वै कल्याणीं प्रजापतेस्तन्वं विद्वान्होता भवति कल्याणं वै
तस्मै होत्रे भवति कल्याणं तेभ्यो यजमानेभ्यो भवति ।5 अध्वर्यो
येषां वा अनिलयां प्रजापतेस्तन्वं विद्वान्होता भवत्यनिलयो वै स
होता भवत्यनिलयास्ते यजमाना भवन्ति ।6 अध्वर्यो येषां वा
अपभयां प्रजापतेस्तन्वं विद्वान्होता भवत्यभयं वै तस्मै होत्रे भवत्य-
भयं तेभ्यो यजमानेभ्यो भवति ।7 अध्वर्यो येषां वा अनाप्तां
प्रजापतेस्तन्वं विद्वान्होता भवत्यनाप्तो वै स होता भवत्यनाप्तास्ते
यजमाना भवन्ति ।8 अध्वर्यो येषां वा अनाप्यां प्रजापतेस्तन्वं
विद्वान्होता भवत्यनाप्यो वै स होता भवत्यनाप्यास्ते यजमाना
भवन्ति ।9 अध्वर्यो येषां वा अनाधृष्टां प्रजापतेस्तन्वं विद्वान्होता
भवत्यनाधृष्टो वै स होता भवत्यनाधृष्टास्ते यजमाना भवन्ति ।10 अध्वर्यो
येषां वा अनाधृष्यां प्रजापतेस्तन्वं विद्वान्होता भवत्यनाधृष्यो वै स
होता भवत्यनाधृष्यास्ते यजमाना भवन्ति ।11 अध्वर्यो येषां वा
अपूर्वां प्रजापतेस्तन्वं विद्वान्होता भवति न वै तस्माद्धोतुरन्यः
पूर्वो भवति न तेभ्यो यजमानेभ्यो ऽन्ये पूर्वे भवन्ति ।12 अध्वर्यो
येषां वा अभ्रातृव्यां प्रजापतेस्तन्वं विद्वान्होता भवत्यभ्रातृव्यो
वै स होता भवत्यभ्रातृव्यास्ते यजमाना भवन्ति येषामेवंविद्वान्होता
भवतीति ।13 ।२। ॥१८॥

गृहपतिरतो गृहपतिवदनम् ।१। अध्वर्यो येषां वै गृहपति-
र्गृहपतिं विद्वान्गृहपतिर्भवति[2] राध्नोति वै स गृहपती राध्नुवन्ति
ते यजमानाः ।[3] अध्वर्यो[4] येषां वा अपहतपाप्मानमेवंविद्वान्गृह-
पतिर्भवत्यप[5] वै स गृहपतिः पाप्मानं हते[6] ऽप ते यजमानाः
पाप्मानं घ्नते[7] येषामेवंविद्वान्गृहपतिर्भवती[8]ति ।२[9]। ॥१०॥

प्रजापत इति मनसा यजति ।१। मनसा वषट्करोति ।२।
मनसानुवषट्करोति ।३। मनसा भक्षः ।४। मनसैवोरोऽभिमर्श-
नम् ।५। औदुम्बरीमन्वारभन्ते ऽपरेण धिष्ण्यानासीनाः ।६। पलाश-
शाखाभिर्यै मानिकामेयुः ।७। उत्तमौ पाणी होता कुर्वीत ।८।
उत्तमो ऽवानीति ।९। अपिधाय सदसो द्वारौ शालायाश्चा-
ध्वर्युर्वाचमुपाकरोति । वाग्यताः संमील्यासत आ नक्षत्राणां दर्श-
नात् ।१०। नक्षत्रेषु दृश्यमानेषु मार्जालीयदेशे तवत्सुरिति नक्ष-
त्रेषु चक्षुर्विसृजन्ते ।११। सर्वे प्राञ्चो निधनमुपेत्योत्तरस्य हविर्धान-
स्याधो ऽक्षं सर्पन्ति ।१२। उत्तरस्योत्तरेण वा ।१३। युवं
तमिन्द्रापर्वतेत्यक्षवेलायां जपित्वापरेण हविर्धाने समुपविश्य कामा-
न्ध्यायन्ते यत्कामा भवन्ति ।१४। ये बहुकामा भूर्भुवः स्वरित्ये-
तास्ते व्याहृतीर्जपेयुः ।१५। ते प्राञ्च उदञ्च उत्क्रम्य वाचं विसृजन्ते
वागैतु वागुपैतु वागुप मैतु वागिति ।१६। सुब्रह्मण्याप्रतीकं त्रिरुपां-
श्वभिव्याहृत्य वाचं विसृजन्ते ।१७। अत्र द्वादशाहः संतिष्ठते ।१८।
कालवादो वा कालत्रादो वा ।१९। ॥२१॥

इति शाङ्खायनसूत्रे दशमो ऽध्यायः समाप्तः ।

# ओम्।

अथातो द्वादशाहः प्रकृतिः सत्त्राहीनानाम्।१। वचनलक्षणो विकारः।२। द्विरात्रप्रभृतयो ऽहीना द्वादशाहपर्यन्ताः।३। द्वादशाहप्रभृतीनि सत्त्राणि।४। अहीनेषु प्रायणीयो न विद्यते।५। सत्त्रधर्माश्च।६। ॥१॥

चतुर्विंशस्तोमं बृहत्पृष्ठमुभयसामाग्निष्टोम उक्थ्यं वा चतुर्विंशमित्याचक्षते।१। होताजनिष्टेत्याज्यम्।२। माधुच्छन्दसः प्रउगः।३। कयाशुभीयं मरुत्वतीयम्।४। अनुत्तमा न इति परिधानीयोत्तराः पूर्वाः शस्त्वा यत्रास्मिन्धीयते निवित्।५। तदिदासीयं निष्केवल्यम्।६। द्वितीयाद्यावापृथिवीये।७। वैश्वदेवमारुते च।८। आर्भवं षष्ठात्।९। वैश्वानरीयं तृतीयात्।१०। यज्ञेन वर्धतेति जातवेदसीयम्।११। सामान्युक्थ्यः।१२। यज्ञायज्ञीयस्य स्तोत्रियेणोक्थ्यस्तोत्रियान्संधाय।13। अनुरूपेणानुरूपान्।14। उभे मरुद्भिर्ऋक्वभिः या इन्द्रावरुणाभ्यां मरुद्भिरिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यां यजूरिति शस्त्वा परिदधाति।15। षडहान्युक्थ्यान् एतया शस्त्रया यजेत्।16। ॥२॥

एकत्रिके तृचकॢप्तं शस्त्रम्।१। यथास्तुतं स्तोत्रियान्शस्त्वा तृचान्वा।2। यथास्तोत्रियमनुरूपान्[3] सामप्रगाथांश्च शस्त्वा।4। पर्यासानामुत्तमांस्तृचान्होत्रकाः शंसन्ति।5। निविद्धानानां होता।6। सर्वमन्यत्प्रकृत्या।7। ॥३॥

अभिप्लवः षळहः पृष्ठ्यविकारः ।१। यानि त्र्यहस्य प्रथमस्याज्यानि समूळ्हे तानि पूर्वेषामाभिप्लविकानाम् ।२। रथन्तरं बृहदिति पृष्ठे विपर्यासम् ।३। ज्योतिरग्निष्टोमः प्रथमसुत्तमं च ।४। चत्वार्युक्थ्यानि मध्ये ।५। गौर्द्वितीयं चतुर्थं च ।६। आयुस्तृतीयं पञ्चमं च ।७। इन्द्रो रथायेति मरुत्वतीयम् ।८। आ याह्यर्वाङिति निष्केवल्यम् ।९। कया देवानामिति वैश्वदेवम् ।१०। पञ्चमे च ।११[10]। मारुतमेकाहात् ।१२[11]। एति प्र होतेति जातवेदसीयम् ।१३[12]। समानमन्यत्प्रथमेनाह्ना ।१४[13]। ॥४॥

इमा उ त्वेति मरुत्वतीयं द्वितीयस्य ।१। सुत इत्त्वं निमिश्ल इति निष्केवल्यम् ।२। एकाहात्सावित्रम् ।३। ततं मे इत्यार्भवम् ।४। पञ्चमे च ।५। देवान्हुव इति वैश्वदेवम् ।६। चतुर्विंशाज्जातवेदसीयम् ।७। समानमन्यद्द्वितीयेनाह्ना ।८। ॥५॥

औष्णिहो वैयमनसः प्रउगस्तृतीयस्य ।१। वायो याहि शिवा[2] वां सहस्रं[3] ता वां विश्वस्य[4] वां वाहिष्ठः[5] मखाय आ जिघामधुत[6] नो देव्यदितिरुत[7] नः प्रियेति[8] प्रउगतृचानि ।२[9]। तिष्ठा हरी इति मरुत्वतीयम् ।३[10]। एकाहान्निष्केवल्यम् ।४[11]। घृतेन द्यावापृथिवी इति तृचम् ।५[12]। षष्ठे च ।६[13]। एकाहादार्भवं वैश्वदेवं च ।७[14]। आ रुद्रासस्[15]त्वामग्न ऋतायव[16] इत्याग्निमारुतम् ।८[17]। ॥६॥

होताजनिष्टेत्याज्यं चतुर्थस्य ।१। मैधातिथः प्रउगः ।२। ये गार्त्समदे ते. वायव्यैन्द्रवायवे । मैधातिथ्यस्तु पूर्वाः ।३। मित्रं वयं[4] प्रातर्युजा[5] त्वा वहन्त्वै[6]भिरग्न इति तृचानि ।४[7]। यानि त्र्यहस्योत्तरस्य मारुतानि समूळ्हे तान्युत्तरेषामाभिप्लविकानाम्

।[8]५। एकाद्यान्मरुत्वतीयम् ।[9]६। उग्रो जज्ञ इति निष्केवल्यम् ।[10]७। द्वितीयात्सावित्रद्यावापृथिवीये ।[11]८। आर्भवं तृतीयात् ।[12]९। अग्निरिन्द्र इति वैश्वदेवम् ।[13]१०। यानि त्र्यहस्य पूर्वस्य वैश्वानरीयाणि तान्युत्तरस्य ।[14]११। प्र ये शुम्भन्ते जनस्य गोपा इत्याग्निमारुतम् ।[15]१२। ॥७॥

अथ ओजिष्ठमित्याज्यं पञ्चमस्य[1] सर्वं चोत्तमां परिहाप्य ।[2]१। संशार्यः प्रउगः ।[3]२। अयं पिब तव वायो स त्वं नो देवेति तृचः[4] शतेना न[5] आ नो मित्रावरुणा[6]ऽ नो गोमन्तमत्स्विदिन्द्र यो[8] विश्वे देवा ऋतावृध इति तृचानि ।[9]३। क स्य वीर इति मरुत्वतीयम् ।[10]४। एतायामेति निष्केवल्यम् ।[11]५। तृतीयात्सावित्रद्यावापृथिवीये ।[12]६। प्र वः स्पळक्रंश्चित्र दृक्षिशोरित्याग्निमारुतम् ।[13]७। ॥८॥

सखायः सं वः सम्यञ्चमित्याज्यं षष्ठस्य[1] सर्वं चोत्तमां परिहाप्य ।[2]१। संशार्यः प्रउगः ।[3]२। वायवा याहि दर्शत[4] रथेन पृथुपाजसा[5] यद्द्य सूर उदिते प्रति वां सूर उदित इति वा[6] पुरुप्रिया ण[7] उप नो हरिभिर्विश्वे[8] देवास आ गतेति भारद्वाजमिति[9] तृचानि ।[10]३। महाँ इन्द्रो नृवदिति मरुत्वतीयम् ।[11]४। यो जात इति निष्केवल्यम् ।[12]५। द्वितीयात्सावित्रम् ।[13]६। अयमु त्य इति वैश्वदेवम् ।[14]७। धारावरास्तमसो शुभिरित्याग्निमारुतम् ।[15]८। इन्द्र दृह्योत वैश्वदेवं षष्ठस्याह्नो द्वितीये ऽभिप्लवे ।[16]९। उपायानकेति तृतीये ।[17]१०। अग्निरिन्द्र इति चतुर्थे ।[18]११। शं न इन्द्राग्नी इति वा ।[19]१२। प्रथमं वा पूर्वस्मिन्पटले द्वितीयमुत्तरे ।[20]१३। परावत इति पञ्चमे ।[21]१४। ॥९॥

अभिजित्सर्वस्तोम उभयसामा रथन्तरपृष्ठो बृहत्पृष्ठो वाग्निष्टोमः ।१। प्र वो देवाय यदाद्दिष्टमित्याज्यम् ।२। उभौ माधुच्छन्दसगार्त्समदौ प्रउगौ ।३। माधुच्छन्दसानि पूर्वाणि तृचानि गार्त्समदान्युत्तराणि ।४। वैश्वदेवं वा गार्त्समदानाम् ।५। ऐकाहिकं वा प्रातःसवनम् ।६। इन्द्र पिब तुभ्यं सुतो मदायेत्यैकाहिकादूर्ध्वं मरुत्वतीयात् ।७। या त ऊतिरिति निष्केवल्यात् ।८। पूर्वे तु बृहत्पृष्ठे ।९। एकसूक्ते वा । पिबा सोममभि यमु उग्रेति । पूर्वस्योत्तमामुत्सृजति ।१०। एकाहात्तृतीयसवनम् ।११। ॥१०॥

सप्तदशस्तोमाः स्वरसामानः ।१। रथन्तरं पृष्ठं प्रथमस्य बृहद्द्वितीयस्योभयसामा तृतीयो रथन्तरपृष्ठः ।२। स्वरपृष्ठाः कौषीतकेः ।३। बृहद्रथन्तरे पवमानेषु ।४। अग्निष्टोमाः पैङ्ग्यस्य ।५। उक्थ्याः कौषीतकेः ।६। आ यत्रेऽहंदयो ऽग्न ओजिष्ठमित्याज्यानि[7] सर्वत्रोत्तमाः परिहाप्य ।७।[8] ये त्र्यहस्य प्रथमस्य ते प्रउगाः ।८।[9] क स्य वीर इति प्रथमस्य स्वरसाम्नो मरुत्वतीयं कयाशुभीयं द्वितीयस्य गायत्साम्नेति तृतीयस्य ।९।[10] मामप्रगाथांश्च प्रस्त्वा कद्रतः प्रगाथाम् ।१०।[11] कं नव्य इति प्रथमे कदू न्वस्येति द्वितीय इमा उ त्वा पुरूवसो इति तृतीये बृहतश्च योनिः ।११।[12] यस्ते साधिष्ठ इत्युत्तमां परिहाप्यार्वायथमिति च प्रथमे[13] गायन्ति त्वापादित उदु नश्चितम इति द्वितीय[14] इन्द्रं विश्वाः सं च त्वे जग्मुरिति तृतीये ।१२।[15] इति बृहद्रथन्तरपृष्ठानाम् ।१३।[16] यज्जायथा अपूर्व्येति स्तोत्रियः स्वरपृष्ठानाम् ।१४।[17] यदिन्द्र चित्र मेहनेति द्वे या इन्द्र भुज इति तृतीयानुरूपस्य

[18]।१५। मत्स्यपायि ते मह इति वा द्वितीयस्य । प्रथमां तृतीयां करोति ।[19]१६। मत्सि नो वस्यइष्टय इति द्वे वयं घ त्वेति तृतीयानुरूपस्य ।[20]१७। प्रत्यस्मै पिपीषत इति वा तृतीयस्य । चतुर्थीं तृतीयां करोति ।[21]१८। इममिन्द्र सुतं पिबेति द्वे क ईं वेदेति तृतीयानुरूपस्य ।[22]१९। ॥११॥

यतो बृहतीकः स्तोत्रियः स्यात्ततो बृहतीको ऽनुरूपः कार्यः ।१। धाय्यां शस्त्वा कदन्तय रथन्तरस्य योनिं प्रथमे बृहतो द्वितीय उभयोस्तृतीये ।२। पूर्वां सर्वत्र रथन्तरस्य ।३। यमिन्द्र दधिष इति द्वे प्रथमे स्वरसि त्वेति द्वितीये दाना मृगो न वारण इति तृतीये ।४। इन्द्र तुभ्यमिन्मघवन्निति नवानां तिसस्तिस्रो ऽन्वहं पूर्वाणि च सूक्तानि ।५। रूपाणि वोऽङ्गत्योभयानि सूक्तानि ।६। स्वरयोनिषु चोल्बयोः ।७। प्रागागुरुभावृचादा प्रगाथेन संशंसति ।८। प्रथमात्त्र्यहात्तृतीयमवमानीति बृहद्रथन्तरपृष्ठानाम् ।९। प्रतिपदश्च स्वरपृष्ठानाम् ।१०। स्वरयोनीनां च ।११। चतुर्थप्रभृति समूल्हान्मध्यमात्त्र्यहात् ।१२। उद्धृत्य तु वैश्वदेवानामुत्तमानि सूक्तानि तर्च च प्र वः पान्तं रघुमन्यवस्तं प्रत्नथा कदित्थेति करोति ।१३। अग्निरिन्द्र इति वा प्रथमे ।१४। प्र ये शुम्भन्त इति च मारुतम् ।१५। देवान्हुव इति द्वितीये ।१६। उषासानक्तेति तृतीये ।१७। ॥१२॥

एकविंशस्तोमं बृहत्पृष्ठं महादिवाकीर्त्यं वाग्निष्टोमो विषुवान् ।१। पुरादित्यस्यास्तमयात्संस्थाप्यः ।२। उदिते प्रातरनुवाकः ।३। यथाप्रकृति वा ।४। अग्निं मन्ये पितरमित्युदिते प्रतिपत्प्रातरनुवा-

कश्य ।५। शतं दशशतं विंशतिशतं वानुब्रूयात् ।६। वासिष्ठमाग्नी-सूक्तम् ।७। सौर्यः पशुरुपालम्भ्यः सवनीयस्य ।८। चित्रं देवानामिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः सौर्यस्य ।९। उपांशु ।१०। समुद्रादूर्मिरित्याज्यम् ।११। त्रैष्टुभः प्रउगः ।१२। मध्यमाच्छन्दोमात्त्रीणि रूपाणि प्रथमे चोत्तमं च ।१३। प्रथमात्त्रीणि ।१४। आश्विने तु भानुमती तृतीया ।१५। प्र मह्नैतु मदनादिति वैश्वदेवम् ।१६। ऐकाहिकं वा प्रातःसवनम् ।१७। प्र वो देवाय त्वं हि चैतवदिति वा मदाज्यम् ।१८। माधुच्छन्दसश्च ।१९। कया शुभा त्वं सुमेधं अनिष्ठा उप इति मरुत्वतीयम् ।२०। आयन्त इव सूर्यमिति स्तोत्रियो ऽस्वयोनौ बृहति ।२१। यद्याव इन्द्रेत्यनुरूपः ।२२। महादिवाकीर्त्यं वा ।२३। चित्रं देवानामिति स्तोत्रियो महादिवाकीर्त्यस्य ।२४। उत्तरे च ।२५। उत्सूर्यो बृहदर्चींषीति तृतीयानुरूपस्य ।२६। मरुत्वानुदु त्यद्दर्शतमिति वा स्तोत्रियानुरूपौ प्रगाथौ ।२७। विभ्राड् बृहदिति वा स्तोत्रियो वि सूर्यो मध्य इत्यनुरूपः ।२८। विश्वाहा त्वा सुमनस इति वा ।२९। मरुत्वानिति सामप्रगाथः ।३०। यः सत्राहा विचर्षणिरिति वा ।३१। रथन्तरस्य योनिं स्वयोनौ बृहति ।३२। उभयोरस्वयोनौ ।३३। महादिवाकीर्त्यं च ।३४। ॥१३॥

यद्येने पवमाने सामगाः कुर्युः ।१। नाक्रियमाणयोः शंसेत् ।२। इन्द्रः किलेत्युक्थमुखीयाः ।३। शं नो भव चक्षसेति महादिवाकीर्त्यं ।४। द्यौर्नय इन्द्रेति सर्वं स्वयोनौ बृहति ।५। य एक इद्धव्य इत्यस्वयोनौ ।६। महादिवाकीर्त्यं च ।७। नमु ष्टुही-

त्युद्धृतस्तवद्रथन्तरे ।८। अभि त्वं मेषम् ।९। ऋतुर्जनित्रीयस्य नव शस्त्वा सर्वहरेवां निविदम् ।१०। आ सत्यो यातु ।११। विश्वजित इत्युत्तमां परिशिष्य ।१२। आह्वय दूरोहणं रोहति ।१३। हंसः शुचिषदिति पच्छो ऽर्धर्चशस्त्रिपच्छो ऽवसानं त्रिपच्छो ऽर्धर्चशः पच्छः ।१४। उत्तमासूपसंशस्य ।१५। एष प्र पूर्वीः ।१६। पतङ्गमक्तम् ।१७। उरुं नः ।१८। इति पैङ्ग्यम् ।१९। अथ कौषीतकम् ।२०। समानमोक्थमुखीयायाः ।२१। ऋतुर्जनित्रीय-मुद्धृतस्तवद्रथन्तरे ।२२। तस्यैवैकादश सयोनी ।२३। नवान्यत्र ।२४। एन्द्र याहि हरिभिरिति पञ्चदशोद्धृत्य साध्यम् ।२५। अथोरेकादश शस्त्वा निविदम् ।२६। अभूरेक इति साध्यस्य स्थाने ।२७। तार्क्ष्यः पूर्वः पतङ्गात् ।२८। एकशतं निष्केवल्यम् ।२९। प्रथमात्स्वाविषम् ।३०। द्वितीयाद्द्यावापृथिवीयम् ।३१। पञ्चादार्भ-वमावत्ते ।३२। देवान्हुव इति वैश्वदेवम् ।३३। तृतीयाद्वैश्वा-नरीयम् ।३४। मूर्धानं मूर्धा दिव इत्यग्निष्टोमसाम्नः स्तोत्रियानु-रूपौ ।३५। वेदिषद इति जातवेदसीयम् ।३६। आहताः स्वर-सामानः ।३७। ॥१४॥

विश्वजित्सर्वस्तोमः सर्वपृष्ठो बृहत्पृष्ठो वाग्निष्टोमः ।१। अग्निं नर इत्याज्यम् ।२। त्वं हि क्षैतवदिति बृहत्पृष्ठस्य ।३। माधुच्छ-न्दसः प्रउगः ।४। चतुर्विंशान्माध्यन्दिनः ।५। वैराजस्य स्तोत्रियानु-रूपौ शस्त्वा सर्वपृष्ठे प्रगाथं च रथन्तरस्य योनिं बृहतश्च ।६। अनुपरमस्तीति यथाक्तृतीयसवनम् ।७। कथा देवानामिति वैश्वदेवं सात्त्विकस्य बृहत्पृष्ठस्य ।८। आनोभद्रीयमेकाहस्य ।९। सर्वपृष्ठे

विश्वजिति पुरस्तात्सामतस्य सूक्तस्य होतैतयामहतं शंसति ।२०। जगतीशंसमन्यूङ्खम् ।२१। पङ्क्तिशंसं वा न्यूङ्खम्।२२। अन्यूङ्खं वा ।२३। समग्रे यज्ञानामित्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ स्तोत्रियानुरूपौ ।२४। ॥१५॥

इति शाङ्खायनसूत्रे एकादशो ऽध्यायः समाप्तः।

होत्रकाणाम् ।१। प्रातःसवने कर्म ।२। आ नो मित्रावरुणा मित्रं वयं मित्रं हुवे ऽयं वां मित्रावरुणा पुरूरुणा चित्प्रति वां सूर उदिते प्र वो मित्राय यदद्य सूर उदिते प्र मित्रयोरिति नः सप्तमिति स्तोत्रिया मैत्रावरुणस्य ।३। आ याहि सुषुमेन्द्रमिद्गाथिन इन्द्रेण सं हीन्द्रो दधीच उत्तिष्ठन्नोजसा सह भिन्धि विश्वाः प्र सम्राजं चर्षणीनां तमिन्द्रं वाजयामसि महाँ इन्द्रो य ओजसा युञ्जन्ति ब्रध्नमिति ब्राह्मणाच्छंसिनः ।४। इन्द्राग्नी आ गतं सुतमिन्द्रे अग्ना नमो बृहदियं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्राग्नी युवामिमे यज्ञस्य हि स्थ ऋत्विजेयं वामस्य मन्मनस्ता हुवे ययोरिदमिन्द्रे अग्ना नमो बृहत्तमीळिष्व ता हि शश्वन्त इति वाच्छावाकस्य ।५। ॥१॥

द्विरात्रप्रभृतिष्वहःसंघातेष्वनुरूपाः स्तःस्तोत्रियाः समानस्तोत्रियेष्वपि ।१। परे वा ।२। नित्यांस्तृचानन्त्याञ्छस्त्राणां पर्यास इत्याचक्षते ।३। प्रति वां सूर उदित इति मैत्रावरुणस्य ।४। काव्येभिरदाभ्येति स्तोत्रिये वा ।५। सति श्वःस्तोत्रिये वा ।६। उद्वेदभीति ब्राह्मणाच्छंसिनः ।७। इन्द्राग्नी अवसेयच्छावाकस्य ।८। अन्तरेणानुरूपं पर्यासं चावापस्थानम् ।९। एकया द्वाभ्यां वा स्तोममतिशंसन्ति ।१०। भूयसा विहृति ।११। सर्वपृष्ठे ऽ विश्वजिति ।१२। एकया दशमे ऽहनि ।१३। युवं दक्षमा नो बर्हीं रिशादसो यं रक्षन्ति कथा राधाम ऋजुनीती नो मा कस्माद्भुतक्रतू मित्रो नो अत्यंहतिं महि वो महतां येमस्य मित्रावरुणा ते नः सन्तु युजः प्र यो वां मित्रावरुणा महि

धौराणमित्येकपातिन्यः ।१४। काव्येभिरदाभ्या नो गन्तमिति तृचौ ।१५। सप्तचत्वारिंशन्मैत्रावरुण्यो गायत्र्यो दाशतयीषु तासां मैत्रावरुणः ।१६। चतुश्चत्वारिंशदैन्द्राणि गायत्राणि तेषां ब्राह्मणाच्छंसी ।१७। इहेन्द्राग्नी उप ह्वये तेषामु स्वदर्णेति पञ्चचे ।१८। यत्सोम आ सुत इति द्वे ।१९। उप सक्रोश्यन्त्येका ।२०। शुचेर्यां यज्ञमिति षट् ।२१। षट्चत्वारिंशदैन्द्राग्न्यो गायत्र्यो दाशतयीषु तासामच्छावाकः ।२२। दशमादह्नः स्तोत्रिया विश्वजिति सर्वपृष्ठे ।२३। षष्ठस्याह्नः स्तोत्रियानुरूपाभ्यामन्येनैषां पञ्चानां स्तोत्रियाञ्छंसन्ति ।२४। आहूनामाहृतस्तोमेषु ।२५। ऊर्ध्वानेकाहभूतस्य ।२६। पर्यासैः परिदधति ।२७। ॥२॥

माध्यन्दिनेषु विकारः ।१। अन्यानि सूक्तान्युत्तरयोः सवनयोः पर्यासा इत्याचक्षते ।२। द्विसूक्ता मध्यन्दिनाः ।३। चतुःसूक्तान्युक्थ्यानि ।४। अप प्राच इति सदा मैत्रावरुणस्योक्थमुखीया ।५। अंहो मर्ता यच्च इन्द्र इति द्वितीये ।६। युधस्य ते कथा महामिति तृतीये ।७। प्र वो महे महिवृधे भरध्वं यज्ञामह इन्द्रमिति तृचौ ।८। सद्यो घा न इन्द्रो दूरादा न आसादिति चतुर्थे ।[8]९। प्रो ष्वस्मा उभे यदिन्द्रेति तृचौ ।[9]१०। गर्भे नु सन्का सुष्टुतिरिति पञ्चमे ।[10]११। इन्द्राय हि द्यौरिति वृषभम् ।[11]१२। आ नः स्तुत उप वाजेभिरूत्या यद्यो यानिति षष्ठे ।[12]१३। तदहीनसूक्तम् ।[13]१४। मध्यमे त्र्यहे इचाञ्जिकल्पानीत्याचक्षते ।[14]१५। यदन्यास्तोत्रियानुरूपाभ्यां तृचेभ्यस्तत्प्रदेशे प्रतीयेत ।[15]१६। सप्तमाष्टमयोरह्नोः अन्त्यं सर्वेषां तत्प्रथमे छन्दोमे ।[16]१७। यत्नूनीय-

पञ्चमयोस्तन्माध्यमे । १८। यच्चतुर्थपञ्चयोस्तदुत्तमे । १९। त्वं महाँ इन्द्र तुभ्यं हेति यत्र होतादीनस्त्वं शंसेत् । २०। के ह यत्पित- रश्चिस इन्द्रेत्येकविंशतिश्छन्दोमेषु पुरस्तात्पर्यासस्य । २१। मा चिद् न्यदि शंसत मा मेम मा अमिपोत्यस्य स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि । २२। आ धूर्ष्वस्मा इति च द्विपदा । २३। ॥ ३ ॥

कं नव्य इति ब्राह्मणाच्छंसिनो ऽनुरूपादनन्तरः प्रगाथः कदा- नैकाहिकस्य स्थाने । १। ब्रह्माणा न इति षोळश्युवीया । २। उदु ब्रह्माणीति मदा पर्यासः । ३। वयं घ त्वा क ईं वेदेति स्तोत्रियानुरूपौ तृतीये ऽहनि । ४। प्रथमयोश्च च्छन्दोमयोः । ५। विपर्यस्तौ तु मध्यमे । ६। यदिन्द्र प्रागपागुदगिति वा स्तोत्रियानु- रूपौ प्रगाथौ । ७। अध्वर्यवो भरतेन्द्रायेत्येकादश तृतीये । ८। विश्वाः पृतना इति स्तोत्रियः । ९। तमिन्द्रं जोहवीमि मघवानमुग्रमिति मघेर ऽस्मा अस्मा इत्यनुरूपः । १०। कदा वसो स्तोत्रं यो बाधा विवाच इति तृचौ । ११। य एक इद्धव्य इति चतुर्थे । १२। इन्द्रो मदाय मदेमदे हीति स्तोत्रियानुरूपौ । १३। आ याहि वनवाम यो न इन्द्राभित इति तृचौ । १४। यस्तिग्मशृङ्ग इति पञ्चमे । १५। सुरूपकृत्नुमिति स्तोत्रियानुरूपौ । १६। त्वया वयं मघवन्निति तृचम् । १७। अस्मा इदु प्र तवस इति षष्ठे । १८। तदहीनसूक्तम् । १९। आयन्त इव सूर्यं अग्ध्यू षु शचीपत इति स्तोत्रियानुरूपौ प्रगाथा उत्तमे छन्दोमे । २०। त्वं महाँ इन्द्र यो हेत्यहीनसूक्तस्य स्थाने । २१। इन्द्रं स्तवेति च्छन्दोमेषु पुरस्तात्पर्यासस्य । २२। उदु त्ये मधुमत्तमा उदिन्वस्य रिच्यत

इति स्तोत्रियानुरूपौ प्रगाथौ दशमे ऽहनि । २२ [23] । त्रिकद्रुकेषु
महिष इति वा स्तोत्रियः [24] । उत्तमा च तमिन्द्रं जोहवीमि विश्वाः
पृतना इत्यनुरूपः । २३ [25] । रायस्काम इति च द्विपदा । २४ [26] । ॥ ४ ॥

कद्रू न्वस्येत्यच्छावाकस्यानुरूपादनन्तरः प्रगाथः कदानैकाहिकस्य स्थाने । १ । उरुं न इति चोक्थ्यमुखीया । २ । अभि नष्टेवेति सदा पर्यासः । ३ । त्वामिदा वयमेनमिदा ह्य इति स्तोत्रियानुरूपौ प्रगाथौ । ४ । अपूर्व्या पुरुतमानीति द्वितीये । ५ । तरणिरित्तरोभिरिति स्तोत्रियानुरूपौ प्रगाथौ । ६ । य ओजिष्ठ इति तृतीये । ७ । यो राजा नकिष्टमिति स्तोत्रियानुरूपौ प्रगाथौ । ८ । सचायोरिन्द्र इन्द्र सोममिमं पिबेति तृचौ । ९ । सं च त्वे जग्मुरिति चतुर्थे । १० । स्वादोरित्थेत्या हि सोम इति स्तोत्रियानुरूपौ । ११ । यच्चिद्धि सत्याव यत्त्वं शतक्रतविति तृचौ । १२ । कदा भुवन् रथक्षयाणीति पञ्चमे । १३ । उभे यदिन्द्रेति स्तोत्रियानुरूपा । १४ । विदुष्टे अस्य वीर्यस्येति तिस्रः । १५ । आ मन्द्रैरिति षष्ठे । १६ । तदहीनसूक्तम् । १७ । नकिष्टं न त्वा बृहन्त इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे । १८ । उभयं शृणवदिति मध्यमे । १९ । यत इन्द्र भयामह इत्युत्तमे । २० । सर्वे प्रगाथाः । २१ । इच्छन्ति त्वेति छन्दोमेषु पुरस्तात्पर्यासस्य । २२ । अया वाजमिति च द्विपदा दशमे ऽहनि । २३ । ऐकाहिकं च पूर्वम् । २४ । ॥ ५ ॥

अन्तरेण प्रायणीयोदयनीयौ कद्वन्तौ चोक्थ्यमुखीयास्वभिनष्टीयं च इहतौकारं च बार्हतानाम् । १ । अन्तरेणोक्थ्यमुखीयां

सूक्ते चावापस्थानम् ।२। पृष्ठ्यान्यूक्तान्यभिप्लवे ।३। अहीनसूक्तानां स्थाने द्वितीयादङ्कः सूक्तानि ।४। उत्तरं मैत्रावरुणस्य ।५। प्रथमात् त्र्यहात्स्वरसामसु ।६। चतुर्विंशे ऽभिजिति विषुवति दृहत्पृष्ठे विश्वजिति महाव्रते च पष्ठात् ।७। विश्वजिति सर्वपृष्ठे ।८। महानाम्नीमां मैत्रावरुणः स्तोत्रियानुरूपौ समगाथौ ।९। कद्वन्तं प्रगाथं वैरूपस्य ब्राह्मणाच्छंसी ।१०। रेवतीनामच्छावाकः ।११। वालखिल्या अविहृता मैत्रावरुणः षट् सूक्तानीन्द्रनिहवं परिधाप्य नो विश्वे सजोषस इति च प्रगाथम् ।१२। वृषाकपिन्हुते कुन्तापमन्यूह्यं ब्राह्मणाच्छंसी ।१३। यौम् च इन्द्रेत्येवयामरुतः स्थाने विष्णुन्यङ्गमच्छावाकः ।१४। अभूरेक इति सामसूक्तं मैत्रावरुणस्य ।१५। यो जात इति ब्राह्मणाच्छंसिनः ।१६। प्र घा न्वस्येत्यच्छावाकस्य ।१७। सामसूक्तानि शस्त्वाहीनसूक्तानि शस्त्वैकाहिकैभिः परिदधति ।१८। एकाहभूतस्यैकाहिकान्यर्थासानूचैर्महीनसूक्तेभ्यः ।१९। ॥६॥

उक्थ्येषु क्रियमाणेषु वालखिल्या वृषाकपिं विष्णुन्यङ्गमित्युद्धृत्य परिशेषान्मध्यन्दिनेषु शंसन्ति ।१। षष्ठादङ्क उक्थानि ।२। अथ यदि षष्ठाह्निकं तृतीयसवनमसर्वपृष्ठे ऽहनि मदिष्टं स्याद्द्वितीयादङ्क उक्थानि ।३। परोक्षपृष्ठे प्रतिशिल्पानि क्रियन्ते ।४। उद्धृत्य वालखिल्या मैत्रावरुणः पिबा सुतस्य रसिन इत्यैन्द्रान्प्रगाथाच्छस्त्वा ।५। वृषाकपिमुद्धृत्य ब्राह्मणाच्छंसीन्द्रो मदायेति पङ्क्तीरैन्द्रीः शंसति ।६। विष्णुन्यङ्गमेवाच्छावाकः ।७। इति परोक्षपृष्ठे ।८। ॥७॥

अथ विश्वजिच्छिल्पे ।१। ऐकाहिकान्प्रगाथाच्छस्त्वा वालखिल्या वृषाकपिं विष्णुन्यङ्गं नाभानेदिष्ठं च सर्वशस्त्रचान्या ।२। चतुर्थ्यचं

पञ्चाक्षपङ्क्तिः स्यादिदङ्क्तिः प्रत्यये न्यूङ्खयेदो ३ श्रो ३ इति । ६ ।
तं शस्त्वा कुन्तापम् । ७ । ॥ १३ ॥

इदं जना उप श्रुत नराशंस स्तविष्यते ।
षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ॥ १ ॥
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश ।
वर्ष्मा रथस्य नि जिहीडते दिव ईषमाणा उपस्पृशः ॥ २ ॥
एष इषाय मामहे शतं निष्कान्दश स्रजः ।
त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥
प्र रेभासो मनीषा वृषा गाव इवेरते ।
अमोत पुत्रका एषाममोत गा इवासते ॥ ४ ॥
प्र रेभ धियं भरस्व गोविदं वसुविदम् ।
देवत्रेमां वाचं श्रीणीहीषुर्नावीरस्तारम् ॥ ५ ॥ । १ । ॥ १४ ॥
वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः ।
नष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥ १ ॥
इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा जरन् ।
ममेदुग्रस्य चर्कृधि सर्व इत्ते पृणादरिः ॥ २ ॥
इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोऽपि पूषा नि षीदति ॥ ३ ॥
नेमा इन्द्र गावो रिषन्मो आसां गोपती रिषत् ।
मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥ ४ ॥
यदिन्द्रादो दाशराज्ञेऽमानुषं वि गाहथाः ।
विरूपः सर्वस्मा आसीत्सह यक्षाय कल्पते ॥ ५ ॥ । २ । ॥ १५ ॥

इह मदो३ इति वैराजतृचमुक्त्वा मदे मधोर्मदस्य मदिरस्य मदेवो३ श्रो३ श्रोथा मोदैवेति प्रतिगृणाति ।११। ऋतुर्जनित्री ।१२। तमस्य द्यावापृथिवी ।१३। विष्णोर्नु कम् ।१४। प्र वः पान्तमन्धसः ।१५। छन्दोमेषु च ।१६। तिस्रस्तु प्रथमे ।१७। भवा मित्र इति तृचाद पूर्वमुत्तरयोश्छन्दोमयोः ।१८। नू मर्तः परो मात्रयेत्युत्तमामुद्धृत्य षष्ठे ।१९। यदिन्द्र चित्र यदिन्द्र ते चतस्र इति स्तोत्रियानुरूपौ प्रथमे छन्दोमे ।२०। पुरां भिन्दुरिति मध्यमे। पूर्वस्तृचो ऽनुरूपस्तृतीया तु प्रथमा ।२१। गायन्ति त्वेत्युत्तमे ।२२। ॥२६॥

चतुर्विंशे प्रथमं प्रथमाच्छन्दोमात्सर्वेषाम् ।१। यच्चतुर्णां द्वितीयप्रभृतीनां तच्चतुर्णामाभिप्लविकानाम् ।२। तृतीयप्रभृतिभ्यः स्वरसामसु ।३। अथ यदभिजितं विषुवन्तं वृहत्पृष्ठं विश्वजितं महाव्रतीयमहरित्युक्थ्यानि कुर्याच्चातुर्विंशिकान्युक्थ्यानि ।४। अथ यदि पृष्ठ्याभिप्लवयोः प्रथमे अहनी दशममहरित्युक्थ्यानि कुर्युरैकाहिकान्युक्थ्यानि ।५। उत्तममाभिप्लविकमुक्थ्यं कुर्युर्यद्द्वितीयस्याह्नस्तृतीयसवनं तत्तृतीयसवनं तमृतीयसवनम् ।६। ॥२७॥

इति शाङ्खायनश्रौतसूत्रे द्वादशो ऽध्यायः समाप्तः ।

# ओम् ।

पूर्वकारिणश्छन्दोगा आध्वर्यवः ।१। ते चेदनुपदिष्टं कुर्युः ।२। एतावन्त इष्टीनामानुपूर्व्ये हविषां दैवत उच्चैर्प्रांशुतायां चाध्वर्युमनुविदधीत ।३। सौमिके छन्दोगमहर्यागे स्तोमविकारे पृष्ठे संस्थायां च ।४। ते चेत्पादं वार्धचं वा विपर्यस्येयुरूनं वातिरिक्तं वा कुर्युर्न तदाद्रियेत ।५। यथासेव विपर्यासमनुविदधीत ।६। न्यूङ्खनीयश्चेत्पादो विकर्षेण पूर्वेत तस्य संख्याय द्वितीयं न्यूङ्खनीयम् ।७। ऊर्ध्वं तु स्वराश्वमानश्छन्दोमानानि व्यञ्जनानि लुप्येरन् ।८। ॥१॥

आनीते पशौ मृते अनुपाकृते अन्यमालभेतर्लिंगभ्यस्तं कारयेत् ।१। उपाकृते वेपमाने

यस्माङ्गीषावेपिष्ठास्ततो नो अभयं कुरु ।
पशुभ्यः सर्वान्गोपाय नमो रुद्राय मीढुषे ॥

स्वाहेति जुहोति ।२। यस्माङ्गीषावाविशा इति वाश्यमाने ।३। यस्माङ्गीषापलायिष्ठा इति पलायमाने ।४। यस्माङ्गीषा न्यषद इत्युपविष्टे ।५। यस्माङ्गीषा संज्ञप्ता इति मृते ।६। नष्टे मृते पलायिते वान्यं तद्रूपं तद्वेवत्यं पशुमालभेत ।७। मृतस्य वपां पुरोडाशमवदानानीतीतरस्य वपद्वारेषुपकुर्यात् ।८। ॥२॥

प्रवृत्तेषु मृते प्रयाजेषु तेनैव संस्थाप्यम् ।१। अवदाने नष्टे

दुष्टे विमथिते वाज्यं प्रतिनिदध्यात् ।२। हृदयनाशे ऽन्यमालभेत ।३। यदि च कामयेतापि विमथितार ऋध्नुयुरिति कुविदङ्ग यवमन्त इत्याग्नीध्रीये जुहुयात् ।४। अष्टापद्यां वशायामनूबन्ध्यायां गर्भस्य त्वचो यथारूपं फलीकरणानां फलीकरणान्मर्म मति शामित्रे अपयित्वेतरस्य वषट्कारेषु शामित्र एव जुहुयात् ।५। ॥३॥

यूपे विरूढे ऽनपरूढे त्वाष्ट्रं बहुरूपमालभेत ।१। पिशङ्गरूपः सुभरो वयोधास्तन्नस्तुरीपमध पोषयित्नु देवत्वष्टः सवितः विश्वरूप इति पुरोनुवाक्या ।२। प्र सु मह्ने सुशरणाय प्रथमभाजं देव त्वष्टर्यद्ध चारुत्वमानळिति याज्याः ।३। ॥४॥

स्थानविषये विहिताण्ययोः सुत्ययोरह्नोः संनिपातमसंसव इत्याचक्षते ।१। पूर्वं प्रातरनुवाकमुपाकृत्य पूर्वं संस्थापयेयुः ।२। सुसमिद्धे जुहुयुः ।३। संवेशायोपवेशाय गायत्र्यै छन्दसे ऽभिभूत्यै स्वाहेति प्रातःसवने ।४। त्रिष्टुभे छन्दस इति माध्यन्दिने ।५। जगत्यै छन्दस इति तृतीयसवने ।६। अध्वर्युं सुतमिच्छन्प्राजापत्याभिस्तिसृभिरध्वर्युः प्रातःसवने जुहुयात् ।७। होतारं होता माध्यन्दिने ।८। उद्गातारमुद्गाता तृतीयसवने ।९। ब्रह्माणं ब्रह्मानुसवनम् ।१०। यजमानं यजमानो ऽनुसवनम् ।११। सर्वान्सुतानिच्छन्तः सर्वे ऽनुसवनम् ।१२। इष्टद्यन्तारे कुर्युः ।१३। आभीकमाभीशवमभिनिधनमभीवर्तं च ।१४। कयाशुभीयं मरुत्वतीयम् ।१५। सजनीयं निष्केवल्यम् ।१६। विहव्यो वैश्वदेवम् ।१७। पूर्वेषु संस्थापयन्नुत्तरां संस्थां कुर्वीत ।१८। अतिरात्रं कुर्वाणेषु द्विरात्रम् ।१९। द्विरात्रं कुर्वाणेषु त्रिरात्रम् ।२०। तस्यां वा संस्थायां

भूयसीर्दक्षिणा दद्यात् ।२१। स्वतन्त्यो वा विहरन्ति वायुराकाशश्च ।२२। ॥५॥

क्रीते सोमे ऽपहृते ऽनतिनयन्कालमन्यमाहृत्याभिषुणुयात् ।१। सोमाहाराय सोमविक्रयिणे वा किंचिद्दद्यात् ।२। अनधिगम्यमाने पूतीकाञ्छ्येतपुष्याण्यर्जुनानि कुशाम्बाभिषुत्य[3] प्रतिदुहा प्रातःसवने शृतेनाध्यक्तेन माध्यन्दिने दध्ना तृतीयसवने ।३[4]। एकां गां दक्षिणां दत्त्वावभृथादुदेत्य पुनर्दीक्षेत ।४[5]। तत्र क्रतुदक्षिणा दद्यात् ।५[6]। एतदेव ।६[7]। अभिदग्धे पञ्च गा दक्षिणा दद्यात् ।७[8]। ॥६॥

प्रातःसवनात्सोमे ऽतिरिक्ते ।१। अस्ति सोमो अयं सुत इति स्तोत्रियानुरूपौ होतुः ।२। ऐन्द्रावैष्णवीभिः सोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। इन्द्रमिद्गाथिनो बृहदतो देवा अवन्तु न इति पद ।५। उत्तमया परिधाय विष्णोः कर्माणि पश्यतेति यजति ।६। ॥७॥

माध्यन्दिनादतिरिक्ते ।१। सप्तस्वानुद त्यद्दर्शतमिति स्तोत्रियानुरूपौ प्रगाथौ ।२। ऐन्द्रावैष्णवीभिः सोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। ॥८॥

. तृतीयसवनादतिरिक्ते ।१। प्र तत्ते अद्य शिपिविष्ट प्र तद्विष्णुरिति स्तोत्रियानुरूपौ ।२। ऐन्द्रावैष्णवीभिः सोममतिशंसेत् ।३। ऐन्द्रावैष्णवी याज्या ।४। ॥९॥

आश्विनादतिरिक्ते ।१। आश्विनीभिः सोममतिशंसेत् ।२। आश्विनी याज्या ।३। अस्तुतं चेत्पर्यायैरभिव्युच्छेत पञ्चभिः स्तोमैर्होत्रकेभ्यः स्तुवते ।४। ते स्तोत्रियानुरूपाञ्छस्त्वोक्थमुखानां जग-

गीर्णां च द्वे द्वे शंसेयुः ।५। नित्याः परिधानीयाः ।६। कृत्स्नैर्वा प्रथमैः पर्यायैः ।७। होत्रे वा प्रथमानां पर्यायाणाम् ।८। मैत्रावरुणाय ब्राह्मणाच्छंसिने च मध्यमानाम् ।९। अच्छावाकायोत्तमानाम् ।१०। चीर्णाश्विनं षष्टिशतानि ।११। ॥१०॥

यदि दीक्षितः प्रमीयेत दग्ध्वास्थीन्युपनह्य पुत्रं भ्रातरं वा दीक्षयित्वा सह यजेरन् ।१[2]। अभिषुत्य वा राजानमगृहीत्वा ग्रहान्दक्षिणापरस्यां वेदिश्रोण्यामस्थिकुम्भं निधाय तस्मिन्देशे सार्पराज्ञीभिः पराचीभिः स्तुवते ।२[3]। मार्जालीयदेशे वा ।३[4]। त्रिः प्रसव्यं मार्जालीयं परियन्ति सव्यानूरूनाघ्नानाः ।४[5]। सार्पराज्ञीर्होता निगदेत् ।५[6]। अपसंमितं स्तोत्रम् ।६[7]। ऐन्द्रवायवाद्या ग्रहाः ।७[8]। संवत्सरे ऽस्थीनि याजयेयुः ।८[9]। स्तोत्रेस्तोत्रे ऽस्थिकुम्भमुपनिदधति ।९[10]। मार्जालीये भक्षानिनयन्ति ।१०[11]। ॥११॥

कलशे दीर्घें[1] विधुं दद्राणमिति वषट्कारनिधनेन ब्राह्मणाच्छंसिने स्तुवते ।१[2]। पूर्वस्तृचो ऽनुरूपः ।२[3]। पावणि दीर्घें[4] स्तनस्य त्वा श्ववधादीयमाणा इति द्युतानेन मारुतेन ब्राह्मणाच्छंसिने स्तुवते ।३[5]। उत्तरो ऽनुरूपः ।४[6]। ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत् ।५[7]। ऐन्द्रावैष्णवी याज्या ।६[8]। अभ्युन्नीतं नाराशंसं

कृताकृतस्य सम्पतं कृतस्य चाकृतस्य च ।
अकृतस्य कृतस्य चेन्द्राग्नी अस्य सोमस्य ॥

स्वाहेत्यन्तःपरिधि भस्मनि जुहोति ।७[9]। उपवाते नाराशंसे[10] यं जघन्यं यद्यं महीयात्तस्य कृतस्याप्यकमवनयेत्प्रजापतये स्वाहेति ।८[11]। दुग्धं सोमं प्राजापत्याभिस्तत्स्तभिरध्वर्युरुत्तरार्धपूर्वार्ध उपरवे

ऽवनयेत् । ९ [12] । हत्नं वेदमह्नमनाद्यभागमिति ध्यायन्नवदृष्टस्य
भक्षयेदिन्दुरिन्द्रमवागात्तस्य त इन्द्रविन्द्रपीतस्योपहूतस्योपहूतो भक्ष-
यामीति । १० [13] । हिरण्यगर्भ इत्यभ्युपाकृते चमसे जुहुयात् । ११ [14] ।
अवच्छाद्य च निर्हरेत् । १२ [15] । य ऋते चिदिति ऋचेन महावीरं
भिन्नमनुमन्त्र्य [16]

त्रयस्त्रिंशत्तन्तवो ये वितत्निरे य इमं यज्ञं स्वधया भजन्ते ।
तेषां छिन्नं समिमं दधामि स्वाहा घर्मो अप्येतु देवान् ॥
यज्ञस्य दोहो विततः पुरुत्रा सो अष्टधा दिवमन्वाततान ।
स यज्ञ धुक्ष्व महि मे प्रजायै रायस्पोषं विश्वमायुरशीय ॥

स्वाहेति चाहुती जुहोति । १३ [17] । ॥ २२ ॥

यदि सत्त्राय दीक्षितो ऽथ साम्युत्तिष्ठेत्सोममपभज्य राजानं विश्वजितातिरात्रेण यजेत सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन । १ । आगूर्य वा । २ । ॥ २३ ॥

आहिताग्नय इष्टप्रथमयज्ञा दीक्षिता गृहपतिमग्रहाः सत्त्रमासीरन्होता मैत्रावरुणो ऽच्छावाको ग्रावस्तुद्ब्रह्मा ब्राह्मणाच्छंसी पोताग्नीध्र उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यो ऽध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता । १ । आर्त्विज्यस्याविप्रतिषेधेनाशक्ये यौगपद्ये । २ । दीक्षणानुपूर्व्येण सर्वेषां याजमानम् । ३ । मुख्यः कुर्यात्परार्थानि । ४ । कल्पविप्रतिषेधे भूयसां साधर्म्यम् । ५ । कृतेषु हाविर्षेषु दक्षिणापथेन कृष्णाजिनानि धून्वन्तो ऽध्वहरित्याजेयुरिदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणां नयामीति । ६ । उत्थाय चाग्निष्टोमः सहस्रदक्षिणः पृष्ठशमनीयः । ७ । साधारणं हैके पृष्ठशम-

नीयम् । ८ । द्वादशाहप्रभृतीन्या चत्वारिंशद्रात्रादेकोत्तराणि रात्रि-सत्त्राणि तेषु नित्यः । ९ । द्वादशाहो यैरहोभिर्विवर्धते तान्युदाहरिष्यामः । १० । ॥ १४ ॥

एकाहार्थे महाव्रतमाहरन्ति । १ । सर्वस्तोमं वातिरात्रम् । २ । अन्तरेण पृष्ठ्यं छन्दोमांश्च । ३ । द्व्यहार्थे गोआयुषी । ४ । द्वितीयं तृतीयं चाभिप्लविके प्रतीयेतैतस्यां चोदनायाम् । ५ । त्र्यहार्थे चौणि पूर्वाण्याभिप्लविकानि । ६ । चतुरहार्थे महाव्रतचतुर्थानि । ७ । पञ्चाहार्थे पञ्च । ८ । षडहार्थे षट् । ९ । सप्ताहार्थे महाव्रतसप्तमानि । १० । एतेन न्यायेन तां तां सङ्ख्यां पूरयन्ति । ११ । अन्तरेण प्रायणीयं पृष्ठ्यं चैतेषां स्थानम् । १२ । ऊर्ध्वं तु दशमादह्नो महाव्रतस्य स्थानम् । १३ । ॥ १५ ॥

अथैतान्यपवदन्ति । १ । अभिप्लवो ऽभिजिद्विश्वजितौ चाग्नतूनि विंशतिरात्रे । २ । अभिप्लवो ऽतिरात्रो द्वावभिप्लवावित्येकविंशतिरात्रः पूर्वः । ३ । पृष्ठ्यः स्वरसामानो विषुवानावृत्ताः स्वरसामानस्त्रयस्त्रिंशारम्भणः पृष्ठ्य इत्युत्तरः । ४ । पृष्ठ्यस्तोमः षळहः ।[5] (*) त्रयस्त्रिंशमहरनिरुक्तम् ।[6] तस्य कण्वरथन्तरं माध्यन्दिने ।[7] त्रयस्त्रिंशं निरुक्तम् ।[8] त्रिणवम् ।[9] द्वे एकविंशे ।[10] त्रिणवम् ।[11] त्रयस्त्रिंशं निरुक्तम् ।[12] त्रयस्त्रिंशमहरनिरुक्तम् ।[13] त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षळहः ।[14] त्रिवृदहरनिरुक्तम् ।[15] ज्योतिष्टोमो ऽग्निष्टोमः[16] इति चतुर्विंशतिरात्रः संवदामयनमित्याचक्षते ।[17] ५ । ॥ १६ ॥

* Comm. इति चतुर्विंशतिरात्र- संवदामयनमित्याचक्षते । इति सूत्रच्छेदः । सूत्रमसूत्रयत्न्ने ।

पञ्चाभिप्लविकानि त्रिरुपेत्य विश्वजिदतिरात्र एष एव पञ्चाहो दशरात्र इति त्रयस्त्रिंशद्रात्रः ।१। चतुर्विंशमभिप्लवः पृष्ठ्यो नवाहो गोआयुषी दशरात्रो महाव्रतमिति सप्तत्रिंशद्रात्रः ।२। चतुर्विंशं त्रयो ऽभिप्लवाः ।[3](*) अभिजित्स्वरसामानो विषुवानावृत्ताः स्वरसामानो विश्वजिच्च ।[4] अभिजित्प्रभृति नवरात्र इत्याचक्षते ।[5] अभिप्लवो गोआयुषी दशरात्रो महाव्रतम् ।[6] इत्येकान्नपञ्चाशद्रात्रः ।[7] संवत्सरसंमितः ।[8]३। ॥१७॥

अथैकषष्टिरात्रे ।१। अभितो नवरात्रं पृष्ठ्यौ ।२। तयोरावृत्त उत्तरः ।३। न्यायक्लृप्तः शतरात्रः ।४। अर्धपञ्चदशाभिप्लवाकेषां प्रथमच्छन्दो दशरात्रो महाव्रतमिति ।५। ॥१८॥

सप्तदश गवामयनस्य दीक्षाः ।१। द्वादश वा ।२। तैषस्यामावास्याया एकाह उपरिष्टाद्दीक्षेरन्माघस्य वा ।३। तेषां माघस्यामावास्यायामुपवसथः फाल्गुनस्य वा ।४। द्वादश दीक्षाः कुर्वाणाश्चतुरहे पुरस्तात्पौर्णमास्या दीक्षेरन् ।५। तेषां ज्यौत्स्नस्य पञ्चम्यां प्रसवः ।६। प्रायणीयमतिरात्रमुपेत्य [7] चतुर्विंशं च [8] पृष्ठ्यपञ्चमांश्चतुरो ऽभिप्लवानुपयन्ति ।[9]७। स मासः ।[10]८। तथान्यान्पञ्च मासानुपेत्य [11] पृष्ठ्यचतुर्थानभिप्लवानुपयन्ति ।[12]९। नवरात्रं च ।[13]१०। ऊर्ध्वं विश्वजितः पृष्ठ्यारम्भणान्मासानुपयन्ति ।[14]११। पृष्ठ्याभिप्लवौ चान्वहमावर्तेते ।[15]१२। वैश्वदेवस्तुतानि चोत्तमानामभिप्लविकानाम् ।[16]१३। पृष्ठ्यमुपेत्य त्रीनभिप्लवान् ।१४। स मासः ।[17]१५। पृष्ठ्य-

---

* Comm. संवत्सरसंमित इति सूत्रान्तः । अथ सूत्रस्य व्याख्या क्रियते ।

मुपेत्य चतुरो ऽभिप्लवान्। तथायुक्तांश्चतुरो मासानुपेत्य [18] चीन-भिप्लवानुपयन्त्यायुर्गो दशरात्रं महाव्रतमतिरात्रं च ।१६। [19] इति गवामयनस्याहर्योगः ।१७। [20] तत्प्रकृतीनि संवत्सरसत्त्राणि ।१८। [21] तेषु विकारो ऽन्यत्र दशरात्रात् ।१९। [22] पृष्ठ्यस्याभिप्लवः स्थाने तदभिप्लवायनम् ।२०। [23] ॥१९॥

उत्सर्गिणामयने ।१। यानि पौर्णमासीभिः सुत्यान्यहानि संनिपतेयुस्तान्युत्सृजेरन् ।२। उभाभ्यां वा दर्शपूर्णमासाभ्याम् ।३। एकत्रिकं वा स्तोमं कुर्वीरन् ।४। एकैकां वा स्तोत्रियाणामुत्सृजेरन् ।५। शस्त्राणाम् ।६। यजुषां च ।७। अहरुत्सृजमानाः प्राजापत्येन तदहः पशुना यजेरन् ।८। यद्देवतो वा सवनीयः स्यात् ।९। तत्र पशुतन्त्रे हवींष्यन्वायातयन्ति ।१०। तेषां स धर्मो यः पशुतन्त्रे चोद्यमानानाम् ।११। परस्याह्नः स्तोत्रियाननुरूपान्कुर्वीरन् ।१२। यथार्थमतिप्रैषः ।१३। उत्थाय च द्वादशाहमासीरन् ।१४। उभयीरुत्सृजमानाः संसदामयनम् ।१५। ॥२०॥

आदित्यानामयने ।१। त्रिवृत्पञ्चदशावभिप्लवस्तोमौ पूर्वस्मिन्पक्षे ।२। पञ्चदशत्रिवृता उत्तरस्मिन् ।३। मध्येपृष्ठ्याय मासाः ।४। षष्ठे मासि चीनभिप्लवानुपेत्य पृष्ठ्यमुपयन्ति नवरात्रं ।५। अभिजितः स्थाने बृहस्पतिसवम् ।६। इन्द्रस्तोमं विश्वजितः ।७। पृष्ठ्यमुपेत्याभिप्लवं च [8] व्यूढच्छन्दसं दशरात्रं ।८। [9] त्रिवृत्स्तोमममग्निष्टोमसंस्थम् ।९। [10] उद्भिद्वलभिदौ च ।१०। [11] मध्येपृष्ठ्यांश्चतुरो मासानुपेत्य [12] मध्येपृष्ठ्यावभिप्लवा उपयन्ति ।११। [13] गोआयुषी ।१२। [14] छन्दोमदशाहं च ।१३। [15] ॥२१॥

अङ्गिरसामयने ।१। त्रिवृदग्निष्टोमः ।२। पृष्ठ्यारम्भणान्मासानुपयन्ति पूर्वस्मिन्पटले ।३। पृष्ठ्योदयानुत्तरस्मिन् ।४। आयुर्गाम् ।५। समानमन्यदादित्यानामयनेन ।६। ॥२२॥

दृतिवातवतोरयने ।१। पृष्ठ्यस्तोमानामेकैकेन मासम् ।२। महाव्रतं विषुवान् ।३। आवृत्तानां पृष्ठ्यस्तोमानामेकैकेन मासम् ।४। अतिरात्रावभितः ।५। अग्निष्टोमा मध्ये ।६। दशदशी संवत्सरः ।७। द्वादशी विषुवान्सर्पसत्त्रस्य ।८। ॥२३॥

मासं दीक्षाः कौण्डपायिनामयनस्य ।१। क्रीत्वा राजानमुपनह्योपसद उपेत्याग्निहोत्रेण मासम् ।२। दर्शपूर्णमासाभ्यां मासम् ।३। चातुर्मास्यपर्वणामेकैकेन मासम् ।४। त्रिवृत्प्रभृतीनां षण्णां पृष्ठ्यस्तोमानामेकैकेन मासम् ।५। अष्टादशाहं त्रयस्त्रिंशेन[6] दशरात्रं महाव्रतमतिरात्रं चेति ।[7]६। यो होता सोऽध्वर्युः स पोता ।[8]७। यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता ।[9]८। य उद्गाता सोऽच्छावाकः स नेष्टा ।[10]९। यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् ।[11]१०। यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता ।[12]११। सुब्रह्मण्यः सुब्रह्मण्यः ।[13]१२। गृहपतिर्गृहपतिः ।[14]१३। देशकालसंनिकर्षेऽविदेशप्रधानस्य वशं नयेत् ।[15]१४। यथादेशमितराणि ।[16]१५। एकाहः संघातमापद्यमानो लभेत तायमानरूपाणि ।[17]१६। सांघातिका एकाहीभवन्तो निवर्तेरन् ।[18]१७। अयंयज्ञीयातिप्रैषः सपुरोनुवाक्यः श्वःस्तोत्रिया होत्रकाणां कद्वन्त उक्थमुखीयाश्चाभिष्टीयमिति तायमानरूपाणि ।[19]१८। गवामेवायनस्याचर्योगः ।[20]१९। ॥२४॥

चतुरो मासान्दीक्षाः ।१। चतुर उपसदः ।२। चतुरः सुत्य-

न्नीति ।३। गवामयनस्य प्रथमोत्तमौ मासौ ।४। अष्टाविंशिनौ च[5] विषुवांश्च ।५। तत् चुल्लकतापश्चितमित्याचक्षते ।[6]६। ॥२५॥

संवत्सरं दीक्षाः ।१। संवत्सरमुपसदः ।२। संवत्सरं सुन्वन्तीति ।३। तत्तापश्चितमित्याचक्षते ।४। ॥२६॥

त्रीन्संवत्सरान्दीक्षाः ।१। त्रीनुपसदः ।२। त्रीन्सुन्वन्ति ।३। इति महातापश्चितम् ।४। अभ्यासो बहुसंवत्सरे गवामयनस्य ।५। मंहार्यान्वा परिहाप्य ।६। अतिरात्रः सहस्रमहान्यतिरात्रो ऽग्निः सहस्रसाव्यम् ।७। ॥२७॥

गवामयनं प्रथमः संवत्सरः ।१। अथादित्यानाम् ।२। अथाङ्गिरसाम् ।३। विश्वांसवरं प्रजातिकामानाम् ।४। विश्वसृजामेतेषां चतुर्णां पृष्ठ्यस्तोमानामेकैकेन त्रीँस्त्रीन्संवत्सरान्प्रजापतेर्द्वादशसंवत्सरम् ।५। एतेषामेवैकैकेन नवनव ब्राह्मणानां षट्त्रिंशत्संवत्सरम् ।६। एतेषामेवैकैकेन पञ्चविंशतिःपञ्चविंशतिः साध्यानां शतसंवत्सरम् ।७। एतेषामेवैकैकेन पञ्चपञ्च पञ्चाशतो विश्वसृजां सहस्रसंवत्सरम् ।८। ॥२८॥

सरस्वत्या विनशने दीक्षा सारस्वतानाम् ।१। क्रीत्वा राजानमुपनह्योपसद उपेत्य[2]१ प्रायणीयमतिरात्रमुपेत्य[3]१ इष्ट्वा सांनाय्येनाध्वर्युः शम्यां परास्य[4]१ तत्र गार्हपत्यं निधाय[5] षट्त्रिंशत्प्रक्रमेष्वाहवनीयमभ्यादधाति ।[6]१। चक्रीवत्सदः ।[7]१। तथाग्नीध्रम् ।[8]१। उलूखलबुध्नो यूपः ।[9]१। नोपरवान्खनन्ति ।[10]६। तमेतमापूर्यमाणपक्षमामावास्येन यन्ति ।[11]७। तेषां पौर्णमास्यां गौरुपयो दृहत्साम ।[12]८। तमेतमपचीयमाणपक्षं पौर्णमास्येन यन्ति ।[13]९। तेषाममा-

वास्रायामायुरुक्थ्यो रथन्तरसामा ।[14] १०। प्रतीपं पूर्वेण पयसा यन्ति ।[15] ११। अपोनप्त्रियं चरुं निरुप्य ।[16] १२। तदस्यानीकमग्निन्मद इत्यपोनप्त्रियस्य ।[17] १३। अप्यये दृषद्वत्याः ।[18] १४। सरस्वतीमपि यन्ति ।[19] १५। शते गोष्वृषभमुत्सृजन्ति ।[20] १६। यदा सहस्रं संपद्यते ऽथोत्थानम् ।[21] १७। सर्वेषु वोपक्षतेषु ।[22] १८। गृहपतौ वा मृते ।[23] १९। प्लाक्षं वा प्रस्रवणं प्राप्याग्नये कामायेष्टिं निर्वपन्ति ।[24] २०। तस्यामश्वां च पौरुषीं च धेनुके दत्त्वा कारपचवं प्रति यमुनामवभृथमभ्यवयन्ति ।[25] २१। इति मित्रावरुणयोरयनम् ।[26] २२। अतिरात्रो ऽभिजिद्विश्वजितौ गोआयुषी इन्द्रस्तुतौ अतिरात्रः ।[27] २३। इतीन्द्राग्न्योः ।[28] २४। अतिरात्रो ज्योतिर्गौरायुर्विश्वजिदभिजिताविन्द्रस्तुतौ अतिरात्रः । २५। इत्यर्यम्णः ।[29] २६। संवत्सरं ब्राह्मणस्य गा रक्षेत् ।[30] २७। संवत्सरं व्यर्णे गोतल्पे ऽग्निमिन्धीत ।[31] २८। संवत्सरे परीणह्याग्नीन्नाधाय दृषद्वत्या दक्षिणेन तीरेणाग्नेयेनाष्टाकपालेन शम्यापरासेशम्यापरासे यजमान एति ।[32] २९। त्रिः प्लक्षं प्रति यमुनामवभृथमभ्यवयन्ति ।[33] ३०। इति दार्षद्वतम् ।[34] ३१। अतिरात्रः सहस्रं त्रिवृतः संवत्सरा अतिरात्रः प्रजापतेः सहस्रसंवत्सरं सहस्रसंवत्सरम् ।[35] ३२। ॥ २९ ॥

इति शाङ्खायनश्रौतसूत्रे त्रयोदशो ऽध्यायः समाप्तः ।

# ओम् ।

एकाहेष्वहीनेषु च प्रकृतेर्विकारः ।१। यस्मिन्नहनि यदहः प्रदिश्येत सवनं वा तदीयं तत् ।२। ऐकाहिकममादेशे ।३। ॥१॥

अग्न्याधेयेन ब्रह्मवर्चसकामो यजेत ।१। तस्याष्टास्वष्टासु स्तोत्राणि ।२। अष्टाक्षरा गायत्री ।३। तेजो ब्रह्मवर्चसं गायत्री ।४। रथन्तरं पृष्ठम् ।५। ब्रह्म रथन्तरम् ।६। अग्निष्टोमो यज्ञः ।७। ब्रह्म वा अग्निष्टोमः ।८। एतेन त्रिःसमृद्धेन ब्रह्मणा तेजो ब्रह्मवर्चसमाप्नोति ।९। दशकृत्वं शस्त्रम् ।१०। त्रिवृता अन्नमन्नं पानं खादयन्ति तस्य सर्वस्याप्त्यै ।११। चतुर्विंशतिर्दक्षिणा ।१२। चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः संवत्सरस्यैवाप्त्यै ।१३। तस्याग्नये पवमानाय पावकाय शुचय इति पशव उपालम्भ्याः सवनीयस्य ।१४। आदित्या वशानूबन्ध्याया उपालम्भ्यैवंविधा ।१५। तद्यदेवं पशवो नियुक्ता भवन्ति नेदग्न्याधेयाद्यानीति ।१६। तस्य प्रातः सवनीयानु पुरोलाशमग्नये पवमानायाष्टाकपालं पुरोलाशं निर्वपति ।१७। माध्यन्दिनीयानन्तु पुरोलाशानग्नये पावकाय ।१८। तृतीयसवनीयानु पुरोलाशानग्नये शुचये ।१९। आवपनं वै सवनीयाः पुरोलाशाः [20] । आवपन एव तदावपति ।२०।[21] अथ यदादित्या वशानूबन्ध्याया उपालम्भ्या भवत्यदितिं[22] वा अन्वग्न्याधेयं संतिष्ठते ।२१।[23] या अग्न्याधेयस्य संस्था तामेव तद्यज्ञस्य संस्थां करोति ।२२।[24] ॥२॥

एवं पशवः पुरोलाशाश्चाम्नायात्यन्ते हविर्यज्ञेषु सोमेषु ।१।

तस्य शस्त्रम् ।२। यदाहिष्ठमिति तृचमाज्यम् ।३। माधुच्छन्दसः प्रउगः ।४। पथस्तयस्तृचा होत्रकाणां प्रातःसवने स्तोत्रियानुरूपौ पर्यासस्य ।५। इन्द्र मरुत्व इह पाहि सोममिति तृचं मरुत्वतीयम् ।६। नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तृचं निष्केवल्यम् ।७। अध्वर्यो वीर प्र महे सुतानामिति तृचं मैत्रावरुणस्योक्थमुखीयम् ।८। पूर्वं ब्राह्मणाच्छंसिनः ।९। उत्तरमच्छावाकस्य ।१०। पर्यासानामुत्तमान् ।११। उदु ष्य देवः सविता हिरण्यया [12]। घृतवती भुवनानाम् [13]। इन्द्र ऋभुभिर्वाजवद्भिः [14]। स्वस्ति नो मिमीताम् [15]। वैश्वानरं मनसा [16]। प्र यन्तु वाजाः [17]। समिद्धमग्निं समिधा गिरा गृण [18] इति तृचानि वैश्वदेवाग्निमारुतयोः सूक्तानां स्थाने ।१२[19]। तृचक्लृप्तमित्येतस्यां चोदनायामेतच्छस्त्रं प्रतीयेत ।१३[20]। ऐकाहिकं वा तृचक्लृप्तम् ।१४[21]। एतेनाग्निहोत्रौ व्याख्यातौ ।१५[22]। आग्नेयं पयः पूर्वस्मिन् ।१६[23]। सौर्यमुत्तरस्मिन् ।१७[24]। पशू च ।१८[25]। प्राजापत्या वशानूबन्ध्याया उपालम्भ्यैवंविधा ।१९[26]। ॥३॥

पुनराधेयेन तेजस्कामो यजेत ।१। तस्य पञ्चसुपञ्चसु स्तोत्राणि ।२। पञ्चपदा पङ्क्तिः ।३। पाङ्क्तो वै यज्ञः ।४। यज्ञस्यैवाप्त्यै ।५। सर्वाग्नेयादग्निष्टुतः शस्त्रम् ।६। ॥४॥

दर्शपूर्णमासावन्नाद्यकामस्य ।१। इलादधावाग्रयणः सोमेष्टि-श्चाप्रवर्ग्यः ।२। दाक्षायणयज्ञास्तुरायणः सर्वकामस्य ।३। महायज्ञस्य ।४। तस्मिंश्चातुर्मास्यहवींष्यन्वायात्यन्ते ।५। पशवश्च पर्वदेवताभ्यः ।६। एककपालदेवताभ्यश्चानूबन्ध्याया उपालभ्या एवंविधाः ।७। अतिरात्रो यज्ञः ।८। ॥५॥

प्रजापतिर्ह प्रजातिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्वैश्वदेवम्।[1] तमाहरत्। तेनायजत।[2] तेनेष्ट्वा प्राजायत।[3] तेन प्रजातिकामो यजेत।१।[4] वैश्वदेवः पशुरुपालभ्यः सवनीयस्य।२।[5] द्यावापृथिवीया वशानूबन्ध्याया उपालम्भ्यैवंविधा।३।[6] त्रिवृतः प्रथमम्।४।[7] उच-क्लृप्तं वा।५।[8] अवभृथादुदेत्योदवसानीययेष्ट्वा सुनिमन्त्रेष्वा यजमान आसे ऽहरहस्तुरेर मासानामाग्नेय्याग्नावैष्णव्या वान्तरालेषु।६।[9] नैव तत्र दीक्षा।७।[10] ॥६॥

वैश्वदेवेन वै प्रजापतिः प्रजा असृजत।[1] ताः सृष्टा अप्रसूता वरुणस्य यवाञ्जक्षुः।[2] ताः वरुणो वरुणपाशैः प्रत्यमुञ्चत्।[3] ताः प्रजाः प्रजापतिं पितरमेत्योपाधावन्।[4] उप तं यज्ञक्रतुं जानीहि येनेष्ट्वा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः संप्रमुच्येमहीति।[5] तत एतं प्रजापतिश्चतुर्थे मासि द्विरात्रं यज्ञक्रतुमपश्यद्वरुणप्रघासम्।[6] तमाहरत्। तेनायजत।[7] तेनेष्ट्वा वरुणमप्रीणात्।[8] स प्रीतो वरुणो वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः प्रजाः प्रामुञ्चत्।[9] प्र ह वा अस्य प्रजा वरुणपाशेभ्यः सर्वस्माच्च पाप्मनः संप्रमुच्यते य एवंविद्वान्वरुणप्रघासैर्यजते।१।[10] उक्थ्यौ भवतः।२।[11] वारुणः पशुरुपालभ्यः सवनीयस्य पूर्वस्मिन्।३।[12] मारुत उत्तरस्मिन्।४।[13] कायी वशानूबन्ध्याया उपालम्भ्यैवंविधा।५।[14] ॥७॥

ताः प्रजाः प्रजापतिमब्रुवन्क्व नु नो ऽन्नाद्यायाभूदिति।[1] तत एतं प्रजापतिश्चतुर्थे मासि त्रिरात्रं यज्ञक्रतुमपश्यत्साकमेधम्।[2] तमाहरत्।[3] तेनायजत।[4] तेनेष्ट्वान्नाद्यमाप्नोत्।[5] तेनान्नाद्यकामो यजेत।१।[6] अग्निष्टोम उक्थ्यो ऽतिरात्रः।२।[7] अग्नये ऽनीकवते प्रथमे

पशुरुपालम्भ्यः सवनीयस्य ।[8]३। मरुद्भ्यः सांतपनेभ्यो द्वितीये ।[9]४।
माहेन्द्रस्तृतीये ।[10]५। वैश्वकर्मणी वशानूबन्ध्याया उपालम्भ्यैवंविधा
।[11]६। ऐकादशिनं यथा पूर्वं शस्त्रम् ।[12]७। पृष्ठ्यो वा विहृतः
।[13]८। विश्वजितो वा बृहत्पृष्ठात्तृतीये ऽहनि शस्त्रम् ।[14]९। सौत्रा-
मणे च ।[15]१०। आयुष्कामयज्ञे महायज्ञे ।[16]११। विनुत्यभिभूत्योः
।[17]१२। स्वर्जिति ।[18]१३। इन्द्रवज्रे च ।[19]१४। ॥८॥

ताः प्रजाः प्रजापतिमब्रुवन्कस्मै नु नः प्रतिष्ठाया असृष्ठा
इति ।[1] तत एतं प्रजापतिर्यज्ञक्रतुमपश्यच्छुनासीरीयम् ।[2] तमाहरत् ।
तेनायजत ।[3] तेनेष्ट्वा प्रत्यतिष्ठत ।[4] तेन प्रतिष्ठाकामो यजेत ।[5]१।
शुनासीरीयः पशुरुपालम्भ्यः सवनीयस्य ।[6]२। सौरी वशानूबन्ध्याया
उपालम्भ्यैवंविधा ।[7]३। विंशतिं वैश्वदेवे ददाति ।[8]४। त्रिंशतं वरुण-
प्रघासेषु ।[9]५। पञ्चाशतं साकमेधेषु ।[10]६। विंशतिं शुनासीरीये
।[11]७। तद्विंशतिशतम् ।[12]८। विंशतिशतं वा ऋतोरहानि ।[13]९। तदृतु-
माप्नोति ।[14]१०। ऋतुना संवत्सरम् ।[15]११। ये च संवत्सरे कामाः
।[16]१२। ॥९॥

पशुमत्सु चातुर्मास्येषु ।१। पूर्वेद्युः पाशुकं कर्म ।२। अप-
रेद्युर्वैश्वदेवः पशुः ।३। पशुपुरोडाशमनु चातुर्मास्यदेवता यथा-
पर्व ।४। पाशुकः स्विष्टकृत् ।५। निगमस्थानवर्जम् ।६। यथास्थानं
वाजिनम् ।७। हृदयशूलान्तं संतिष्ठते ।८। वारुणमारुतौ वरुण-
प्रघासेषु ।९। उत्तरे यूपमुच्छ्रयन्ति ।१०। माहेन्द्रशुनासीरीया
उत्तरयोः ।११। यथास्थाना इडाः ।१२। पित्र्या च ।१३।
यथादैवतं वा पशवः ।१४। तद्व्याख्यातमेकादशिन्या ।१५। आनो-

कवतः सांतपनो गृहमेधीयः कौशिनो मैत्रश्च महाहविषि ।१६। पर्वणिपर्वणि वा संस्थित ऐन्द्राग्नः ।१७। समानमनन्यत् ।१८। अथवाप्येकपर्वण्येकपशौ चैन्द्राग्ने पराचि हवींषि ।१९। उपहूयेलां पित्र्या ।२०। त्र्यम्बकादूर्ध्वमनुयाजप्रभृति । मनोतादिपशुना वा ।२१। सौमिकैः समानदक्षिणानि सर्वपशूनि ।२२। चातुर्मास्यपशुदक्षिणैः पाशुकानि ।२३। ॥१०॥

प्रत्यवरोहणीयः प्रतिष्ठाकामस्य ।१। संकल्पविहृतो ज्योतिष्टोमः ।२। पशुबन्धः पशुकामस्य ।३। एकादशस्तोमः ।४। एकादशाक्षरा त्रिष्टुप् ।५। त्रैष्टुभाः पशवः ।६। पशूनामेवाप्त्यै ।७। पिबा सोममभि यमुग्र तर्द एतायामोप गव्यन्त इन्द्रमिति निविद्धाने ।८। ऊर्वं गव्यं महि गृणान इन्द्रेतायामोप गव्यन्त इन्द्रमिति गोसत्वे तदेतस्याह्नो रूपम् ।९। उद्भिद्बलभिदोर्गोसवे च ।१०। ॥११॥

अथातः सौत्रामणिः ।१। इन्द्रो ह्यायुष्कामस्तपस्तेपे ।[2] स तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्सौत्रामणिम् ।[3] तमाहरत् ।[4] तेनायजत ।[5] तेनेष्ट्वा दीर्घायुत्वमगच्छत् ।[6] तमु ह भरद्वाजाय जीर्णाय प्रोवाच ।[7] अनेन वा अहमिष्ट्वा दीर्घायुत्वमगच्छमनेनापि त्वं यजेति ।[8] तेन ह भरद्वाज इष्ट्वा सर्वायुत्वमगच्छत् ।[9] सर्वमायुरेति य एवं वेद य उ चैनेन यजते ।२।[10] तस्य रथन्तरं पृष्ठम् ।३।[11] अग्निष्टोमो यज्ञः ।४।[12] यथाश्रद्धं दक्षिणा ।५।[13] तस्य त्रीणि त्रिवृन्ति स्तोत्राणि ।६।[14] त्रीणि पञ्चदशानि ।७।[15] त्रीणि सप्तदशानि ।८।[16] त्रीण्येकविंशानीति ।९।[17] उत्तरोत्तरितायै ।१०।[18] उत्तरोत्तरावद्दीर्घायुत्वमश्नवामहा इति ।११।[19] ॥१२॥

तस्याश्विनो लोहो ऽजः सारस्वती मेषीति पशू उपालम्भ्यौ सवनीयस्य । १। इन्द्राय सुत्राम्णे वशानूबन्ध्याया उपालम्भ्यैवंविधा । २। तदेवं पशवो नियुक्ता भवन्ति नेक्षौत्रामण्या अयानीति । ३। तस्य प्रातःसवनीयाननु पुरोलाशान्वाह्नतो ऽग्निमुपसमाधाय सुरासोमेन चरन्ति । ४। तृतीयसवनीयाननु पुरोलाशान्वाविर्धं द्वादशकपालं पुरोलाशं निर्वपति । ५। ऐन्द्रमेकादशकपालम् । ६। वारुणं दशकपालम् । ७। आवपनं वै सवनीयाः पुरोलाशा आवपन एव तदावपति । ८। अथ यदिन्द्राय सुत्राम्णे वशानूबन्ध्याया उपालम्भ्या भवतीन्द्रं[9] वा अनु सुत्रामाणं सौत्रामणी संतिष्ठते । ९[10]। येव सौत्रामण्याः संस्था तामेव तदस्य संस्थां करोति । १०[11]। तं हैके ऽतिरात्रं कुर्वन्ति । ११[12]। एकविंशस्तोमं बृहत्पृष्ठमुभयसामानम् । १२[13]। तस्य यद्दिग्वजितो बृहत्पृष्ठस्य शस्त्रं तच्छस्त्रम् । १३[14]। अत्र हविर्यज्ञाः सोमाः संतिष्ठन्ते । १४[15]। ॥ १३ ॥

देवा ह पशुकामास्तुरो मासाग्रतं चरित्वेममुद्भिदं यज्ञक्रतुमपश्यन् [1] तेनेष्ट्वा पशूनापुः [2] तेन पशुकामो यजेत [3] उद्भिदेष्ट्वा यदि मन्येत विरान्मा पशव आगुरिति चतुरो मासान्व्रतं चरित्वा बलभिदा यजेत [4] चिप्रं हैनं पशव आयन्ति । ५[5]। ॥ १४ ॥

गोसवेन पशुकामो यजेत । १। षट्त्रिंशत्स्तोमेन । २। षट्त्रिंशदक्षरा बृहती । ३। बार्हताः पशवः । ४। पशूनामेवाप्त्यै । ५। षट्त्रिंशत्सहस्रा दक्षिणा गोसवस्य । ६। अयुतं वा । ७। उक्थ्यो यज्ञः । ८। ॥ १५ ॥

ऋतपेयेन तेजस्कामो यजेत । १। द्वादश दीक्षा द्वादशोपसदः

।२। मध्यमेनाङ्गुष्ठपर्वणौदुम्बरं चमसं मितं घृतस्य प्रतयेत् ।३। अयुजासु चीरौदनं दीचासु ।४। सोमचमसो दक्षिणाभिमुखस्य ।५। ऋतं सत्यं वदन्तो भचयेयुः ।६। भूर्भुवः स्वरिति वा ।७। सगोत्राय वा ब्रह्मणे दद्यात् ।८। जनिष्ठा उग्रः सहसे तुराय कया महामवधत्कस्य होतुरिति निविद्धाने ।९। मन्दमान ऋतादधि प्रजाया ऋतस्य हि शुरुधः सन्ति पूर्वीरित्यृतवती तदेतस्याह्नो रूपम् ।१०। ॥१६॥

प्रजापतिरिमं लोकमीप्संस्तपस्तप्तैतं यज्ञक्रतुमपश्यद्भूः। तेनेष्ट्वेमं लोकमाप्नोत्। तेनेमं लोकमीप्सन्यजेत ।१। ॥१७॥

प्रजापतिरन्तरिक्षलोकमीप्संस्तपस्तप्तैतं यज्ञक्रतुमपश्यद्भुवः। तेनेष्ट्वान्तरिक्षलोकमाप्नोत्। तेनान्तरिक्षलोकमीप्सन्यजेत ।१। ॥१८॥

प्रजापतिरमुं लोकमीप्संस्तपस्तप्तैतं यज्ञक्रतुमपश्यत्स्वः। तेनेष्ट्वामुं लोकमाप्नोत्। तेनामुं लोकमीप्सन्यजेत ।१। स्वरसामभ्यः शस्त्राणि यथासोमम् ।२। आनुष्टुभानि च ।३। ॥१९॥

सूर्यो ह तेजस्कामस्तपस्तप्तैतं यज्ञक्रतुमपश्यच्छुक्रसोमम्। तेनेष्ट्वा तेज आप्नोत्। तेन तेजस्कामो यजेत ।१। एकविंशतिः श्वेताश्वा दक्षिणा ।२। वैषुवतमहः ।३। ॥२०॥

तीव्रसवः प्रजया पशुभिस्तीव्रस्य बुभूषतः ।१।

अयं तीव्रस्तीव्रसदिन्द्र सोमो यचदद्याय हरिवो अस्य पाहि।

वज्रं शिशानो जठरं पृणस्वानाधृष्यं वृषभं तुविमिन्द्रम्॥

इति पुरस्तात्सूक्तनीयस्य निविद्धानस्य ।२। तीव्रस्याभिवयस इति निष्केवल्ये ।३। ॥२१॥

ज्योतिः सूतसवः । १ । गौः स्थपतिसवः । २ । आयुर्ग्रामणीसवः । ३ । संदंशानुलोमाविषुवन्तौ श्येनाजिरौ स्वत्यन्तकौ क्षुरपविर्गो- घेच्छिदौ मदः श्येनश्चाभिचरणीयाः । ४ । मन्युसूक्ते निविद्धाने लिङ्गक्लृप्ते । ५ । यत्पृष्ठेनाभिचरेयुस्तत्पृष्ठः प्राकृतो ऽभिचर्यमाणस्य । ६ । इषौ इषद्वत्साम । ७ । अभीवर्त इतरेषु । ८ । शिखरैः सदश्छन्नं भवति । ९ । कार्मुकाण्युपशेरते । १० । बाणवद्भिरामीभम् । ११ । धान्वनान्युपशेरते । १२ । शरमयं बर्हिः । १३ । बाधका इध्मः परिधयश्च । १४ । वैभीदको यूपः । १५ । उपतापिनीनां गवामाज्यम् । १६ । अनुस्तरण्या गोश्चर्माधिषवणम् । १७ । शवनभ्ये अधिषवणफलके । १८ । श्ववत्यामापः संस्रुतास्ताभिर्वसतीवरीः गृह्णन्ति । १९ । कपोतपत्त्या अधिज्यधन्वानो लोहितोष्णीषा असिबद्धाः प्रचरेयुः । २० । न हैतं कश्चनेष्मीतेयत्को ऽदादशाहं जीवेत् । २१ । न ह वै तं कश्चन स्तृणुते य एतैः प्रत्यभिचरति । २२ । मदः पाप्मानं द्विषतश्चापजिघांसमानस्य । २३ । उपोत्तमाय शस्त्राणामुत्सृज्यन्ते । २४ । उपमदः प्रजाकामस्य पशुकामस्य च । २५ । उपोत्तमाय शस्त्राणामुपजायन्ते । २६ । ॥ २२ ॥

देवासुराः समयतन्त [1] । ते देवा बृहस्पतिं पुरोहितमुपाधावन्नुप त्वं यज्ञक्रतुं जानीहि येनेष्ट्वासुरानभिभवेमहीति [2] । स एतमृषभं यज्ञक्रतुमपश्यत् [3] । तेनेष्ट्वासुरानभ्यभवन् [4] । तेन द्विषतो भ्रातृव्यानभिबुभूषन्यजेत । [5] १ । पञ्चदशस्तोमस्य सप्तदशो माध्यन्दिनः पवमानस्तदस्य ऋषभरूपम् । [6] २ । पिबा सोममभि यमुग्र तर्द इत्सु हृदि यो अभिभूत्योजा इति निविद्धाने । [7] ३ । यः शिप्रवानृषभो

यो मनीनां गीर्भिर्वृधं वृषभं चर्षणीनामित्युभयवती तदेतस्याक्रो रूपम् ।४। ॥२३॥

सूर्यो ह तेजस्कामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्व्योमानम् ।१। तेनेष्ट्वा तेज आप्नोत् । तेन तेजस्कामो यजेत ।२। सप्तदशस्तोमस्यैकविंश आर्भवः पवमानः ।३। एकविंशो वा एष य एष तपति तदेनं स्वेन रूपेण समर्धयति ।४। इमा उ त्वा पुरुतमस्येत्र्यं सजेति निविद्धाने ।५। सूर्येण वयुनवच्चकार य सूर्यः पर्युरु वरांसीति सूर्याभिव्याहारे तदेतस्याक्रो रूपम् ।६। ॥२४॥

वसिष्ठो ह्यन्नाद्यकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्विराजम् ।१। तेनेष्ट्वान्नाद्यमाप्नोत् ।२। तेनान्नाद्यकामो यजेत ।३। पञ्चदशौ पूर्वौ पवमानौ विष्टम्भीतराणि ।४। स विराजमभिसंपद्यते ।५। श्रीर्वैराजन्नाद्यं श्रियो विराजो ऽन्नाद्यस्योपाप्त्यै ।६। महश्चित्त्वमिन्द्र यत एतांस्त्वं राजेन्द्र ये च देवा रथन्तरवैराजे निविद्धाने तदेतस्याक्रो रूपम् ॥७। ॥२५॥

इन्द्रो ह स्वाराज्यकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वराजम् ।१। तेनेष्ट्वा स्वाराज्यमाप्नोत् ।२। तेन स्वाराज्यकामो यजेत ।३। सप्तदशौ पूर्वौ पवमानौ विष्टम्भीतराणि ।४। तायतस्तः स्तोत्रिया विराजमतियन्ति ।५। ताभिः स्वाराज्यमाप्नोति ।६। भद्रवैराजे च ।७। ॥२६॥

उशना ह काव्यो ऽसुराणां पुरोहित आस ।१। स ह देवानामन्नमगित्वा परिदद्रे । स ऐक्षत । कथं नु तेन यज्ञक्रतुना यजेयं येनेष्ट्वा पाप्मानमपहन्यामिति ।२। स एतमुशनस्तोमं यज्ञक्रतुमपश्यत् ।३। तेनेष्ट्वा पाप्मानमपाहत ।१। तेन पाप्मानमपजिघांसमानो यजेत

।[5] १। उदरव्याधितश्च ।[6] २। त्रिवृत्प्रातःसवनम् ।[7] ३। ब्रह्म वै त्रिवृत्
।४। त्रिवृतैव तद्ब्रह्मणा पुरस्तात्पाप्मानमपाहत ।[8] ५। सदशो माध्य-
न्दिनः ।[9] ६। सा विराट् ।७। विराजैव तन्मध्यतः पाप्मानमपाहत
।[10] ८। त्रिवृत्तृतीयसवनम् ।[11] ९। ब्रह्म वै त्रिवृत् ।१०। त्रिवृतैव
तद्ब्रह्मणोपरिष्टात्पाप्मानमपाहत ।[12] ११। अर्यमा द्यौर्न च इन्द्रेति
निविद्धाने ।[13] १२। उशना यत्सहस्यैरयातं वरिवस्यन्नुशने काव्यायेत्यु-
शनवती तदेतस्याह्नो रूपम् ।[14] १३। ॥२७॥

स हैक्षत । पाप्मानमपहत्य कथं नु तेन यज्ञक्रतुना यजेयं
येनेष्ट्वान्नाद्यमाप्नुयामिति । स एतमुत्तरमुशनस्तोमं यज्ञक्रतुमप-
श्यत् ।[1] तेनेष्ट्वान्नाद्यमाश्नोत् ।[2] तेनान्नाद्यकामो यजेत ।[3] १। त्रिवृ-
त्प्रातःसवनम् ।[4] २। ब्रह्म वै त्रिवृत् ।[5] ३। सदशो माध्यन्दिनः ।[6] ४।
सा विराडन्नाद्यम् ।[7] ५। त्रिवृत्तृतीयसवनम् ।[8] ६। ब्रह्म वै त्रिवृत्
।[9] ७। त्रिवृतैव तद्ब्रह्मणोभयतोऽन्नाद्यं परिगृह्यात्मन्नधत ।[10] ८।
तथो एवैतद्यजमानस्त्रिवृतैव तद्ब्रह्मणोभयतोऽन्नाद्यं परिगृह्यात्म-
न्धत्ते ।[11] ९। उशनवती च ।[12] १०। त्रिविधश्चैवंस्तोमोऽन्नाद्यकामस्य
।[13] ११। मवरवैराजे च ।[14] १२। सहस्रं शताश्वं दक्षिणा ।[15] १३। ॥२८॥

इन्द्राग्नी वै देवेषु श्रैष्ठ्ये विवदेयाताम् ।[1] ते देवा ऊचुः ।
यदि वा इमावेवं विवदिष्येते अभि नो ऽसुरा भविष्यन्ति ।[2] उप
तं यज्ञक्रतुं जानीम येनैनौ संशमयेमहीति ।[3] त एतं यज्ञक्रतुमप-
श्यन्निन्द्राग्न्योः कुलायम् ।[4] तेनैनौ समशमयन् ।[5] १। तेन ब्राह्मणस्य
क्षत्रियस्य संयजेयातां यं पुरोधास्यमानः स्यात् ।[6] २। ब्रह्मवर्चे एव
तत्तन्नौ संवृजेते ।[7] ३। त्रिवृत्पञ्चदशौ स्तोमौ ।[8] ४। अग्निर्वै त्रिवृ-

दिन्द्रः पञ्चदशः ।[9]५। इन्द्राग्नी एव तत्त्वौ समसृजताम् ।[10]६। तिष्ठा
हरी तसु ष्टुहीति निविद्धाने ।[11]७। अग्नेः पिब जिह्वया सोममि-
न्द्राग्निर्न शुष्कं वनमिन्द्र हेतिरित्यैन्द्रे अग्निमती तदेतस्याह्नो
रूपम् ।[12]८। ॥२८॥

मित्रावरुणयोर्वै वैराज्यमन्यतर ऐच्छत्स्वाराज्यमन्यतरः ।[1] तावेतं
यज्ञक्रतुमपश्यतां विराट्स्वराजम् ।[2] तेनेष्ट्वा वैराज्यमन्यतर आश्नो-
त्स्वाराज्यमन्यतरः ।[3]१। अचरवैराजे च ।[4]२। ॥३०॥

ज्येष्ठस्तोमः कनिष्ठकुलीनस्य ज्यैष्ठ्यं कामयमानस्य ।१। सप्त-
दशो बहिष्पवमानः ।२। एष वै स्तोमानां ज्येष्ठः ।३। तमेव
तद्यज्ञमुखे युनक्ति ।४। कनिष्ठा उपः सहसे तुराय प्र व. सतां
ज्येष्ठतमाय सुष्टुतिमिति ज्येष्ठाभिव्याहारे निविद्धाने तदेतस्याह्नो
रूपम् ।५। ॥३१॥

देवासुराः समयतन्त । ते देवा बृहस्पतिं पुरोहितमुपा-
धावन् ।[1] उप तं यज्ञक्रतुं जानीहि येनेष्ट्वासुरा नाभ्यवेयुरिति ।[2] स
एतं दूराशं यज्ञक्रतुमपश्यत् ।[3] तेनेष्ट्वासुरा नाभ्यशायन् ।[4] ततो वै
देवा अभवन्परासुराः ।[5] भवत्यात्मना परास्य द्वेष्यो य एवं वेद
।[6]१। अपरपक्षे सौरोहिः पूर्वाह्णे ।[7]२। चाक्रमणी सायम् ।[8]३। त्रिधु
दद्राणं नवोनवः ।[9]४। सौवर्णः शतवलो दक्षिणा पूर्वस्याम् ।[10]५।
राजत उत्तरस्याम् ।[11]६। भारद्वाजं पृष्ठम् ।[12]७। तथा सूक्ते ।[13]८।
स्तोत्रेस्तोत्रे स्तुते त्रिंशतंत्रिंशतं शतवलान्ददाति ।[14]९। यावद्वा
यजमानो हिरण्यमिच्छेत् ।[15]१०। ॥३२॥

इन्द्रो ह्यपचितिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदपचितिम् । तेने-

ष्ट्वापचितिमाप्नोत् । तेनापचितिकामो यजेत ।१। चतुर्विंशौ पूर्वौ पवमानौ ।२। त्रिवृत्पञ्चदशान्याज्यानि ।३। सप्तदशैकविंशानि पृष्ठानि ।४। त्रिणव आर्भवः पवमानः ।५। एकविंशमग्निष्टोमसाम ।६। सह गायत्रीमभि प्रातःसवनं संतिष्ठते ।७। गायत्रच्छन्दसो वसवः । तेनेन्द्रो वसुष्वपचितिमाश्नुत ।८। गायत्रच्छन्दसो ब्राह्मणाः । तेनायं ब्राह्मणेष्वपचितिमश्नुते ।९। त्रिष्टुभं माध्यन्दिनं सवनम् ।१०। त्रिष्टुप्छन्दसो रुद्राः । तेनेन्द्रो रुद्रेष्वपचितिमाश्नुत ।११। त्रिष्टुप्छन्दसः क्षत्रियाः । तेनायं क्षत्रियेष्वपचितिमश्नुते ।१२। जगतीं तृतीयसवनम् ।१३। जगच्छन्दस आदित्याः । तेनेन्द्र आदित्येष्वपचितिमाश्नुत ।१४। जगच्छन्दसो विशः । तेनायं विक्ष्वपचितिमश्नुते ।१५। वाचान्याह वाचा शंसति वाचा यजति ।१६। वागनुष्टुप् ।१७। अनुष्टुप्छन्दसो विश्वे देवाः । तेनेन्द्रो विश्वेषु देवेष्वपचितिमाश्नुत ।१८। अनुष्टुप्छन्दसः शूद्राः । तेनायं शूद्रेष्वपचितिमश्नुते ।१९। अश्वरथः खाङ्गकवचो वैयाघ्रपरिष्कन्द आर्चीपासङ्गो द्वैपधन्वधिः श्यावाश्वो दक्षिणा ।२०। अपचितिमता रूपेणापचितिमाप्नवानीति ।२१। इन्द्र सोमं सोमपत इन्द्रं स्तवेति निविद्धाने इन्द्राभिव्याहारे । तदेतस्याह्नो रूपम् ।२२। ॥३३॥

सूर्यो ह त्विषिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्त्विषिम् । तेनेष्ट्वा त्विषिमाप्नोत् । तेन त्विषिकामो यजेत ।१। अश्वरथः कांस्यकवचः श्वेताश्वो दक्षिणा ।२। त्विषिमता रूपेण त्विषिमाप्नवानीति ।३। सूर्याभिव्याहारे निविद्धाने । तदेतस्याह्नो रूपम् ।४। ॥३४॥

वरुणो ह दृष्टिकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्दृष्टिम् । तेनेष्ट्वा

वृष्टिमाप्नोत् । तेन वृष्टिकामो यजेत ।१। उद्वां चक्षुर्वरुण सुप्रतीकमिन्द्रावरुणा युवमध्वराय न इतीन्द्रावरुणाभिव्याहारे निविद्धाने । तदेतस्याह्नो रूपम् ।२। ॥२५॥

भानुमतो ह तेजस्कामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदादित्यम् । तेनेष्ट्वा तेज आप्नोत् । तेन तेजस्कामो यजेत ।१। यं वै सूर्यं स्वर्भानुः स्वर्भानोरध यदित्यादित्याभिव्याहारे निविद्धाने । तदेतस्याह्नो रूपम् ।२। ॥२६॥

इन्द्राविष्णुर्ह स्वर्गकामस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वर्गम् । तेनेष्ट्वा स्वर्गमाप्नोत् । तेन स्वर्गकामो यजेत ।१। इन्द्राभिव्याहारे निविद्धाने । तदेतस्याह्नो रूपम् ।२। ॥२७॥

देवासुराः समयतन्त ।१। ते देवा बृहस्पतिं पुरोहितमुपाधावन् ।२। उप नौ यज्ञक्रतू जानीहि याभ्यामिष्ट्वासुरान्विजित्याभिभवेमेति ।३। स एतौ यज्ञक्रतू अपश्यद्विजित्यभिभूती ।४। तान्विजितिना विजित्याभिभूतिनाभ्यभवन् ।५। तस्य विजित्तेः चतूर्ध्वाः पृष्ठ्यस्तोमाः पराञ्चो विष्वञ्चः स्तोमाः ।१। विष्वञ्चो वै भूत्वा विजयन्तीति ।२। तद्विजित्ते रूपम् ।४। अथाभिभूतेः चतूर्ध्वाः पृष्ठ्यस्तोमाः परावत्ताः सम्यञ्चः स्तोमाः ।५। सम्यञ्चो वै भूत्वाभिभवन्तीति ।६। तदभिभूते रूपम् ।७। यदिमजितो बृहदृहस्य तदेनयोः शस्त्रम् ।८। ॥२८॥

राशिमरायावसायकामस्य ।१। उत्तमौ छन्दोमौ समूह्यात् ।२। स्त्रीणां गवां सहस्रं दक्षिणे ददाति ।३। पुंसामुत्तरे ।४। तस्यां दीक्षोपसदः ।५। तयोरुदयनीया ।६। यमावनूचीनगर्भा वा

मंयजेयाताम् । ७ । विघनः पाप्मानं द्विषतश्चापजिघांसमानस्य । ८ । कयाशुभीयतद्विदासीये वा निविद्धाने । ९ । भ्रातृव्यं द्विषतश्चापजिघांसमानस्य । १० । ॥ ३९ ॥

आदित्याश्च ह वा अङ्गिरसश्चास्पर्धन्त ।[1] वयं पूर्वे स्वर्गं लोकमेष्याम इत्यादित्या वयमित्यङ्गिरसः ।[2] ते ऽङ्गिरस आदित्येभ्यः प्रोचुः । श्वः सुत्या नो याजयत न इति । तेषां ह्याग्निर्दूत आस ।[3] त आदित्या ऊचुः । यदि वा एते पूर्वे यक्ष्यन्त्येते पूर्वे स्वर्गं लोकं गमिष्यन्ति ।[4] [अभि नो ऽसुरा भविष्यन्ति।][(5)*] उप तं यज्ञक्रतुं जानीम येन वयं पूर्वे यजेमहीति ।[5(6)] त एतं साद्यःक्रं यज्ञक्रतुमपश्यन् ।[6(7)] तेनेष्ट्वा पूर्वे स्वर्गं लोकमायन् ।[7(8)] तेन स्वर्गकामो यजेत । १[8(9)] । त्रिवृत्स्तोमः । २[9(10)] । रथन्तरं पृष्ठम् । ३[10(11)] । वृषकृतं शस्त्रम् । ४[11(12)] । अग्निष्टोमो यज्ञः । ५[12(13)] । यवोर्वरा वेदिः । ६[13(14)] । यवखल उत्तरवेदिः । ७[14(15)] । लाङ्गलेषा यूपः । ८[15(16)] । यवकलापिस्रपालम् । ९[16(17)] । ईजानस्य कुलादग्नीवर्यः । १०[17(18)] । दृतिषु दधि सनीवास्यन्ते । ११[18(19)] । ततो यत्सर्पिरुद्वैति तेन प्रचरन्ति । १२[19(20)] । अश्वरथः सोमप्रवाकः । १३[20(21)] । योजने ऽन्ततः । १४[21(22)] । अश्वो दक्षिणा । १५[22(23)] । पूर्वाह्णे दीक्षणीया । १६[23(24)] । अभ्यर्थं कर्माणि वर्तन्ते । १७[24(25)] । अर्धलुप्तः प्रवर्ग्यः । १८[25(26)] । तिस्रः पराचीरुपसदः । १९[26(27)] । पुरोडाशो ऽग्नीषोमीयः । २०[27(28)] । सवनीयकाले समानतन्त्राः पशवः । २१[28(29)] । आश्विनो वशानूबन्ध्यायाः स्थाने । २२[29(30)] । मैत्रावरुण्या वा पयस्यया यजेत । २३[33(31)] । अथो पूर्वप्रक्रान्तामन्वैच्छन् । २४[31(32)] । ॥ ४० ॥

* The words in brackets are given only in some MSS. of the text. They are explained in one MSS. of the Commentary and omitted in the other.

एषैवोत्तरस्य विधा ।१। स्तोमा एवान्यथा ।२। अष्टादशाः
पवमानास्त्रि[3]वृन्तीतराणि ।[4]३। स एष उक्थ्यः प्रत्याहृतः ।[5]४। यो
ऽग्निष्टोमे कामो य उक्थ्ये तयोरुभयोराप्त्यै ।[6]५। गोधूमैर्वशा ।[7]६।
गोधूमखलः ।[8]७। गोधूमकलापिग्यपालम् ।[9]८। कुम्भ्या आपो
वसतीवर्यः ।[10]९। अयः पेशमप्रवाकः ।[11]१०। चैपदे ऽन्ततः ।[12]११।
वडवा दक्षिणा ।[13]१२। ॥४१॥

एषैवोत्तरस्य विधा ।१। स्तोमा एवान्यथा ।२। चतुर्विंशाः
पवमानास्त्रि[3]वृन्तीतराणि ।[4]३। स एष वाजपेयः प्रत्याहृतः ।[5]४।
यः षोडशिनि कामो यो वाजपेये तयोरुभयोराप्त्यै ।[6]५। यद्यस्य
द्विषन्भ्रातृव्यो ऽनुक्रिया यजेत परिक्रिया यजेत । यदि परिक्रियो-
त्क्रिया ।[7]६। एकत्रिकत्रिकैकाभ्यां ब्रह्मवर्चसकामो यजेत ।[8]७।
एकस्यां तिसृष्विति प्रथमस्य स्तोत्राणि भवन्ति ।[9]८। तिसृष्वेक-
स्यामित्युत्तरस्य ।[10]९। ताश्चतुर्विंशतिः स्तोत्रियाः ।[11]१०। चतुर्विंशत्य-
क्षरा गायत्री ।[12]११। तेजो ब्रह्मवर्चसं गायत्री ।[13]१२। तदाभ्यां तेजो
ब्रह्मवर्चसमाप्नोति ।[14]१३। इन्द्रस्तुत्प्रशस्तौ ।[15]१४। अभिजिदभिजिगी-
षतः ।[16]१५। विश्वजिद्विश्वं जिगीषतः ।[17]१६। विशंस्यौ च तौ ।[18]१७।
अग्निष्टोमौ भूत्वान्योन्यस्मिन्प्रत्यतिष्ठताम् ।[19]१८। उक्थ्यौ भूत्वान्योन्य-
स्मिन् ।[20]१९। अतिरात्रौ भूत्वान्योन्यस्मिन् ।[21]२०। ॥४२॥

इन्द्रो वै नॄञ्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यन्नृजितम् । तेनेष्ट्वा
नॄनजयत् । तेन नॄञ्जिगीषन्यजेत ।१। ॥४३॥

इन्द्रो वै पृतनाजं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्पृतनाजितम् ।
तेनेष्ट्वा पृतनाजमजयत् । तेन पृतनाजं जिगीषन्यजेत ।१। ॥४४॥

इन्द्रो वै सत्राजं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्सत्राजितम्। तेनेष्ट्वा सत्राजमजयत्। तेन सत्राजं जिगीषन्यजेत ।१। प्रथमा-त्र्यहान्मध्यन्दिनेषु निविद्धानानि ।२। ॥४५॥

इन्द्रो वै धनं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यद्धनजितम्। तेनेष्ट्वा धनमजयत्। तेन धनं जिगीषन्यजेत ।१। चतुर्विंशमहः ।२। ॥४६॥

इन्द्रो वै स्वर्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्स्वर्जितम्। तेनेष्ट्वा स्वरजयत्। तेन स्वर्जिगीषन्यजेत ।१। उत्सन्नयज्ञ इव वा एष यत्स्वर्जित् ।२। ॥४७॥

इन्द्रो वै सर्वं जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यत्सर्वजितम्। तेनेष्ट्वा सर्वमजयत्। तेन सर्वं जिगीषन्यजेत ।१। महाव्रतीय-महः ।२। ॥४८॥

इन्द्रो वै सर्वमुज्जिगीषंस्तपस्तप्त्वैतं यज्ञक्रतुमपश्यदुज्जितम्। तेनेष्ट्वा सर्वमुदजयत्। तेन सर्वमुज्जिगीषन्यजेत ।१। जनिष्ठा उग्रः सहसे तुराय नमु ष्टुहि यो अभिभूत्योजा इति निविद्धाने ।२। ध्वान्तात्प्रपित्वादुदन्त गर्भाः उत्तूर्वयार्ण ध्यता निनेधेत्युद्वतो तदे-तस्याह्नो रूपम् ।३। ॥४९॥

इन्द्रो वै त्रिशीर्षाणं त्वाष्ट्रमहनत् ।[1] अरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छत् ।[2] तं सर्वाणि भूतान्यभ्याक्रोशन् ।[3] स देवेभ्यः पार्श्वत इव चचार ।[4] ते देवा ऊचुः। यदि वा अयमेव चरिष्यत्यभि नो ऽसुरा भविष्यन्ति ।[5] उप तं यज्ञक्रतुं जानीम येनैनमुपाह्वयेमहीति ।[6] त एतमुपहव्यं यज्ञक्रतुमपश्यन्। तेनैनमुपाह्वयन्त ।[7] तेनावरुद्धो राजा यजेत राष्ट्रमवजिगीषन् ।[8] अह वैव गच्छति ।[9] ।१। इमा उ त्वा

पुरुतमस्य कारोर्हव्यं वीर हव्या हवन्ते य एक इद्धव्यश्चर्षणीनामिति श्नतवती निविद्धाने ।[10] नदेतस्याक्तो रूपम् ।[11] २। ॥५०॥

तमभ्येवाक्रोशन्ननहंजानतया वैतत्पाप्या वाचस्या ।[1] सो ऽग्नये सर्वाणि सवनानि प्रायच्छत् ।[2] तस्याग्निः सर्वामनहंजानतां सर्वां पापीमलक्ष्मीं निरदहत् ।[3] स यो ऽनहंजानतः स्यात् वा पापीं वागभिवदेत्सो ऽग्निष्टुता यजेत ।[4] तस्याग्निः सर्वामनहंजानतां सर्वां पापीमलक्ष्मीं निर्दहति य एवं वेद[5] य उ चैनेन यजते ।[6] १। * त्रिवृत्स्तोमेन त्रिष्टोमेन वा ब्रह्मवर्चसकामः ।[7] २। चतुष्टोमेन प्रतिष्ठाकामः ।[8] ३। प्रातरनुवाकप्रभृति हारियोजनान्तं सर्वमाग्नेयम् ।[9] ४। यथार्थमूहः ।[10] ५। वपनात्पत्याप्याप्यः ।[11] ६। अग्निं मन्ये पितरमिति प्रतिपत्प्रातरनुवाकस्य ।[12] ७। लिङ्गेनुत्तरयोः क्रत्वोरग्निशब्दं कुर्वीत ।[13] ८। प्र देववेत्युद्धृत्य चोमस्य मेति चतुर्दश ।[14] ९। समोपधीरित्यवनीयमानाम् ।[15] १०। औवंभृगुवदिति तिस्रो ऽग्नय इत्युद्धृत्य ।[16] ११। उपप्रयन्तोऽत्तोणि प्रेति प्रथमे उत्तमा चाग्निमन्थनीयानाम् ।[17] १२। अग्ने जुषस्व नो हविरिति प्रथमा चतुर्थी पञ्चमी सवनीयानाम् ।[18] १३। दूतं वो विश्ववेदसमिति द्विदेवत्यानाम् ।[19] १४। ॥५१॥

अग्निमीळे पुरोहितमित्युन्नीयमानेभ्यः ।१। अग्निं दूतमिति सप्त प्रस्थितानाम् ।२। उत्तरायसस्तो ऽच्छावाकप्रकस्य स्थाने ।३। अग्ने दिव इति याज्यान्यस्य ।४। उप त्वा जामय ऐभिरग्ने कस्ते जामिर्न योरुपन्दिरग्निर्वाणग्ने सुतस्याग्ने घृतवतायेति प्रउगहचानि

* The commentary from this Sūtra up to 14, 52, 3 is wanting in both MSS.

